**कामः** । परब्रह्मपरमात्मायत्ता हि सर्वेऽमी प्राणिनामुपभोग्याः खलु [illegible] न च तद्दानादृते केनचित्कुत्रचित् कदाचिदुपभोक्तुं शक्यन्ते । [illegible] प्रभुरात्मीयया परमया दयया यथाप्राणिकर्म यदा कदा यस्मै कस्मै यं कञ्चित् पदार्थं प्रददाति स एव पुण्यजन्मा तदुपभोगं लभते [illegible] दानं चास्य भगवतः प्रत्येकमुपभोग्यानां पदार्थानां प्रतिप्राणिभेदं [illegible] मनुवर्त्तते न जातु क्षणमपि विरम्यते । नहि लोके तादृक्षः प्राणी [illegible] विद्यते येनाद्य न मह्यं किञ्चिददादिति वक्तुं पार्य्यते । अजस्रम [illegible] चास्ति तद्दानप्रवृत्तिः । यत्रेदमाम्नातम् **"अहं भुवं वसुनः [illegible] स्पतिरहं धनानि सञ्जयामि शश्वतः । मां हवन्ते [illegible] न जन्तवोऽहं दाशुषे विभजामि भोजनम्"** (ऋ० [illegible] १।५।१) **"अहं राष्ट्री सङ्गमनी वसूनां चिकि[illegible] प्रथमा यज्ञियानाम् । तां मा देवा व्यदधुः पुरुत्रा [illegible] स्थात्रां भूर्य्यावेशयन्तीम्"** (ऋ० ८।७।११।३) **"[illegible] सोऽन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणो[illegible] त्युक्तम् । अमन्तवो मां त उपक्षियन्ति श्रुधि श्रुत ! श्र[illegible] ते वदामि"** (ऋ० ८।७।११।४) **"नकिरस्य श[illegible] नियन्ता सूनृतानाम् । नकिर्वक्ता न दादिति"** (ऋ० [illegible] ३।३।१५) इति । सर्वे गन्धाः प्रभवन्ति यस्मात्, यद्वा [illegible] सर्वगन्धोत्पत्तिः, अधिष्ठानकारणत्वात् सर्वगन्धानां यः प्रभवस्थानं [illegible] **सर्वगन्धः** । एवं **सर्वरसो**ऽपि व्याख्येयः । **सर्वमिदमभ्या[illegible]** अततेर्व्याप्तिकर्म्मणः कर्त्तरि निष्ठाप्रत्ययः । सर्वमिदं चराचरं ज[illegible] व्याप्तः अभिव्याप्य स्थित इति यावदित्यर्थः । **अवाकी**=उच्यते[illegible] वाक्, वागेव वाकः, **यद्वा** वचेर्घञन्तस्य करणे वाकः, वागि[illegible] स विद्यते यस्य स **वाकी** न वाक्यवाकी, वाक्प्रतिषेधश्चात्रोपलक्ष[illegible] तेनेन्द्रियान्तरप्रतिषेधोऽप्यवगन्तव्यः **"अपाणिपादो जवनो [illegible] हीता पश्यत्यचक्षुः स शृणोत्यकर्णः"** (श्वे० ३।१९) [illegible] त्यादिश्रुतेः । **अनादरः**=अवाप्तसमस्तकामत्वेन नित्यतृप्ततया न [illegible]

क्वचिदादरः=सम्भ्रमो यस्य सोऽनादरः आदर्तव्याभावादादररहितः । अप्राप्तप्राप्तौ ह्यादरः स्यादनाप्तकामस्य, नाप्तकामत्वान्नित्यतृप्तस्य भगवतः परब्रह्मणः स युज्यते क्वचिदित्यनादरः । **ज्यायस्त्वं** परममहत्वम् । तत्पृथिव्यादीनां सातिशयं भगवतस्तस्य च निरतिशयम् । एतदेव **"ज्यायान् पृथिव्याः"** इत्यादिना प्रदर्श्यते । अनेन **"स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपमाकाशात्मानं कामरूपिणं मनोजवसं सत्यसङ्कल्पं सत्यधृतिं सर्वगन्धं सर्वरसं सर्वा अनुदिशः प्रभूतं सर्वमिदमभ्याप्तमवाकमनादरम्"** (शत० १० । ६ । ३ । २) इति श्रुतिरपि व्याख्याता द्रष्टव्या । विवक्षितगुणोपपत्तेरात्मशब्दस्य परमात्मवचनत्वावधारणात् । अतो ब्रह्मशब्दोऽत्र परब्रह्मवचन इति सिद्धम् ॥ २ ॥

सिद्धान्तं व्यवस्थाप्य पूर्वपक्षं निरस्यन्नाह—

**"अनुपपत्तेस्तु न शारीरः"** ॥ ३ ॥

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । **शारीरः**=प्रत्यगात्मा, **न**=अत्र ब्रह्मशब्दार्थो न युज्यते, कुतः ? **अनुपपत्तेः**=विवक्षितगुणानुपपत्तेरित्यर्थः ।

ये हि मनोमयत्वादयस्तावदिहोपास्यगुणा विवक्ष्यन्ते न च ते परब्रह्मवत् प्रत्यगात्मन्याञ्जस्येनोपपद्यन्ते । नहि प्रत्यगात्मा मनोमयः प्राणशरीरो भारूप इति कथञ्चिदुपपद्यमानोऽप्याकाशात्मा सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरो ज्यायान् पृथिव्याः ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्य इत्युपपद्यते । न चानुपपन्नस्य स्वीकारो ज्यायान् । परब्रह्मपरमेश्वरस्तु शरीरे भवोऽपि न तदात्मेत्यभिमन्यते, प्रत्यगात्मा च तथाऽभिमन्यते । तस्मादेष शारीरो नात्र ब्रह्मशब्दार्थः ॥ ३ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"कर्मकर्तृव्यपदेशाच्च"** ॥ ४ ॥

हेत्वन्तरपरश्चकारः । न शारीर इत्यनुवर्तते । **कर्मकर्तृव्यपदेशात्**=उपास्यस्य मनोमयत्वादिगुणकस्य ब्रह्मणः कर्मत्वेन प्राप्यत्वेनोपास-

कस्य पुरुषस्य शारीरस्य प्रत्यगात्मनः कर्तृत्वेन प्रापकत्वेन व्यपदेशात्... धानाद् गम्यते न शारीरः प्रत्यगात्मा ब्रह्मशब्दार्थ इत्यर्थः ।

**"एतमितः प्रेत्याभिसम्भवितास्मि"** ( छां० ३ । १४ ... इत्युपसंहरन्ती खलु श्रुतिरभिसम्भवितास्मि=प्राप्तास्मीत्युपास्यं ब्रह्म... "एतम्" इति परामृश्य प्राप्तिक्रियां प्रति कर्मत्वेन प्राप्यत्वेन... पुरुषं शारीरं प्रत्यगात्मानं च कर्तृत्वेन प्रापकत्वेन व्यपदिशति । कर्तृभावश्च भेदाधिष्ठानो न जात्वभेदे व्यपदेष्टुं शक्यते । नहि प्राप्... याया यत्कर्म स एव तस्याः कर्तेति युज्यते । यत्प्राप्यते तदुपास्यं... येन प्राप्यते स उपासकोऽन्य इति प्राप्यप्राप्तृभावलक्षणः कर्म... यथा भेदाधिष्ठानस्तथोपास्योपासकभावोऽपि भेदाधिष्ठानो द्रष्टव्यः... तदनुपपत्तेः । तस्मात् प्रत्यगात्मा शारीरो नात्र ब्रह्मशब्दार्थ... सिद्धम् ॥ ४ ॥

ननु **"आत्मा वा अरे द्रष्टव्यः"** ( बृ० ४ । ५ । ६ ... दिवत् कर्मकर्तृव्यपदेशोऽयं गौणः किन्न स्यात् ? तत्राह—

**"शब्दविशेषात्"** ॥ ५ ॥

न कर्मकर्तृव्यपदेश इति विपरिणम्यानुवर्त्तते । शब्दविशे... कर्मवाचककर्तृवाचकशब्दयोर्विशेषाद् भेदान्न कर्मकर्तृव्यपदेशो गौणः... **"आत्मा वा अरे द्रष्टव्यः"** (बृ० ४ । ५ । ६) इत्यादौ ... वाचकशब्दात् कर्तृवाचकः शब्दः खलु न विशिष्यते, तेन तत्रोप... स्कृत्य कर्मकर्तृव्यपदेशो गौणः कथञ्चिदास्थातुं शक्यते । अत्र चाहि... वाचककर्तृवाचकशब्दयोर्विशेषः । कर्म ह्युपास्यं परं ब्रह्म परमात्... **"एष म आत्माऽन्तर्हृदये"** (छां० ३ । १४ । ३) इति ... विभक्त्या, कर्ता चोपासकः प्रत्यगात्मा शारीरः षष्ठ्या विभक्त्या... श्यते । प्रथमा च षष्ठ्या विशिष्टेति निर्विवादम् । यथाचेह तथा... प्रकरणे श्रुत्यन्तरेऽपि तच्छब्दविशेषः श्रूयते **"यथा व्रीहिर्वा य... श्यामाको वा श्यामाकतण्डुलो वा, एवमन्तरात्मन्...**

हिरण्मयः" (शत० १०।६।३।२) इति। अत्र हि कर्तुरुपासकस्य प्रत्यगात्मनोऽभिधायको यः शब्दः सप्तम्यन्तः "अन्तरात्मन्" इति, तस्माद्विशिष्टोऽन्यः प्रथमान्तः पुरुषशब्दः कर्म्मण उपास्यस्य परब्रह्मणः परमेश्वरस्याभिधायकः स्फुटमुपादीयते। न चैतावन्मात्रमेव। अपि च? अत्रैवोपक्रमे कर्मोपास्यं ब्रह्मात्मशब्दाभ्यां कर्तोपासकश्च पुरुषशब्देनोपन्यस्यते। सोऽयं कर्मकर्तृशब्दयोर्विशेषः कर्मकर्तृव्यपदेशे मुख्येऽभ्युपगम्यमाने सत्युपपद्यते न गौणे। नहि राज्ञः पुरुष इति शब्दविशेषः खलु स्वस्वामिभावं गौणमभ्युगम्योपपादयितुं शक्यते। "राहोः शिरः, आत्मनश्चैतन्यम्" इत्यादिव्यपदेशस्तु बाधितः शास्त्रानुमानाभ्यामिति नोदाहरणाय कल्पते। नचेह मुख्ये किञ्चिद् बाधकमुपलभामहे। तस्माद् गम्यते नूनम् "**एतमितः प्रेत्याभिसम्भवितास्मि**" इति कर्मकर्तृव्यपदेशो मुख्यो न जातु गौण इति॥ ५॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"स्मृतेश्च"** ॥ ६॥

न कर्मकर्तृव्यपदेश इति पूर्ववदनुवर्तते। हेत्वन्तरमेतदिति चकारेणोच्यते। **स्मृतेः**=मनुस्मृतेर्गम्यते न कर्मकर्तृव्यपदशो गौण इत्यर्थः।

**"एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना। स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम्"** (मनु० १२।१२५) इति हि मानवी स्मृतिः। अत्राभ्येति=प्राप्नोतीति प्राप्तिक्रियाकर्म प्राप्यंावत् परब्रह्म परमेश्वरस्तत्क्रियाकर्तुः प्रापकात् प्रत्यगात्मनः शारीरात्यन्तं भेदेनाधीयते। तमेतं कर्मकर्तृभेदं मा नाम कश्चिद्गौणं शङ्किष्टेति व्यावृत्त्यर्थं परं पदमिति कर्मविशेषणमुपादीयते। **त्रीणि खलु पदानि** भवन्ति—प्रकृतिः, प्रत्यगात्मा, परमात्मा च। **तत्र** प्रकृतिराद्यं पदम्। सा हि संसारदुःखादात्मानं मोचयितुकामैः प्रथमं पद्यते। नहि कश्चिदशेषविशेषतः प्रकृतिं न प्रतिपद्यते संसारदुःखाच्च मोमुच्यते इति सञ्जङ्गमीति। प्रकृत्याऽपिधीयते खलु प्रत्यगात्मा। न च तामप्रति-

पद्य स केनचित्प्रतिपत्तुं पार्य्यते । तत्प्रतिपत्तिश्चावश्यकी । प्र
प्रतिपत्तिहेतुत्वात् । प्रत्यगात्मनोऽन्तरात्मा च परमात्मा । तेन
त्सुना पूर्वमवश्यं प्रकृतिः पत्तव्या, तदनन्तरं प्रत्यगात्मा,
परमात्मा । स्थूलसूक्ष्मा तावत्प्रकृतिः, सूक्ष्मतरः प्रत्यगात्मा, सूक्ष्म
परमात्मा । न च स्थूलसूक्ष्माविज्ञाने तदन्तरस्य सूक्ष्मतरस्य,
विज्ञाने च तदन्तरस्य सूक्ष्मतमस्य विज्ञानं कर्हिचिदुत्पत्तुमर्हति।
बालोऽपि पूर्वं स्थूलं तदनु सूक्ष्मं तदनु सूक्ष्मतरं तदनु सूक्ष्मतमं
गृह्णन्नुपलभ्यते । धानुष्कोऽपि प्राथमिकः पूर्वं स्थूलं वेद्धव्यं
तदनु सूक्ष्मं तदनु सूक्ष्मतरं तदनु सूक्ष्मतमं चेत्यालोक्यते।
लोकस्तथा वेदः । लोकार्थत्वाद् वेदस्य । ततो गम्यते नूनं प्रश्नि
श्वराणामेष एव युक्तः प्रतिपत्तिक्रमः । परमात्मनः परं च नास्ति
ञ्चित्पत्तव्यम् । अतः प्रकृतिरधमं पदं, प्रत्यगात्मा मध्यमं पदं, प
च परमं पदमिति व्याख्यायते । यत्रेदमाम्नातं भवति "तद्वि
**परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुरा**
**। २० । तद्विप्रासो विपन्यवो जगृवांसः समि**
**विष्णोर्यत्परमं पदम्"** ( ऋ० १ । २ । ७ । २०-२१)
**वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति**
**पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्"** ( कठ० २ । १५)
**विज्ञानवान् भवति समनस्कः सदा शुचिः स तु**
**माप्नोति यस्माद्भूयो न जायते । ८ । "विज्ञानसारथि**
**मनःप्रग्रहवान् नरः । सोऽध्वनः पारमाप्नोति तद्वि**
**परमं पदम्"** ( कठ० ३ । ८९ ) इति । परं पदं परमं
चानर्थान्तरम् । स्वरूपवचनश्चात्र पदशब्दः । पद्यते=गम्यते=संसा
दात्मानं मोचयितुकामैः प्राप्यते यत् तत्पदमिति तद्व्युत्पत्तेः ।
रमोपपदेन पदशब्देन परमात्मनः स्वरूपमाख्यायते, निरुपपदेन
च यथाप्रकरणं प्रत्यगात्मनः प्रकृतेश्च स्वरूपमिति बोद्धव्यम्।
परमपदस्य परमं धाम, शाश्वतं स्थानं चेति नामान्तरम् । यत्रैव

**"न तद्भासयते सूर्यो न शशाङ्को न पावकः। यद्गत्वा न निवर्तन्ते तद्धाम परमं मम"** (गी० १५।६) **"तमेव शरणं गच्छ सर्वभावेन भारत। तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्"** (गी० १८।६२) इति। न च पदं परं पदं चोभयं कदाचिदेकं सम्पद्यते। तथा सति परमिति विशेषणोपादानवैयर्थ्यप्रसङ्गात्। अतः पदं प्रत्यगात्मा, परं पदं च परमात्मेत्येनयोः स्पष्टो मुख्यो भेदः। न च तत्र मुख्ये तस्मिन्विद्यमाने तन्निबन्धनः कर्मकर्तृव्यपदेशो गौणः कर्हिचिदाश्रयितुं शक्यते। भेदे मुख्ये तन्निबन्धनव्यपदेशस्यापि मुख्यत्वौचित्यात्। तथा च नात्र कर्मकर्तृव्यपदेशो गौण इति निर्बाधम् ॥ ६ ॥

**सम्प्रति** जैवं लिङ्गमणीयस्त्वमाशङ्क्य निरस्यति—

**"अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च"** ॥ ७ ॥

**अर्भकौकस्त्वात्**=अर्भकमल्पं परिच्छिन्नमोको नीडं स्थानमायतनं यस्य, तस्य भावस्तत्त्वं, तस्मात्- हृदयपुण्डरीकलक्षणाल्पायतनत्वात्, **तद्व्यपदेशाच्च**=तदाऽर्भकं परामृशति, व्यपदेशः कथनम्, अर्भककथनाच्च **न**=ब्रह्मशब्दोऽत्र परमेश्वरवचनो नेति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः? **निचाय्यत्वात्**=हृदयपुण्डरीके द्रष्टव्यत्वादुपास्यत्वादे**वम्**=अर्भकौकस्त्वेनार्भकत्वेन च व्यपदिश्यते न स्वरूपतः, यतो **व्योमवच्च**=आकाशवत् सर्वेभ्यो ज्यायान् महानपि निर्दिश्यत इत्यर्थः।

अथोच्येत **"एष म आत्माऽन्तर्हृदये"** (छां० ३।१४।३) इति पूर्वमुपदिष्टस्योपास्यस्य परब्रह्मणः परमात्मनः खल्वर्भकेऽल्पे परिच्छिन्ने हृदयपुण्डरीके स्थितिमुक्त्वा **"अणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा"** (छां ३। १४।३) इत्यणीयस्त्वमर्भकत्वमल्पत्वं परिच्छिन्नत्वं तावद्व्यपदिश्यते। तदिदं व्यपदिश्यमानं हृदयस्थानत्वमल्पत्वं च शरीरेन्द्रियपञ्जराध्यक्षस्यास्य प्रत्यगात्मनो

धर्मः सम्भवति न भगवतो जगज्जन्मादिकारणस्य परमात्मनः । सर्वभूतान्तरात्मत्वात् सर्वस्थानो विभुत्वाच्च महत्परिमाणः । यत्रेदमा "सर्वभूतेषु चात्मानम्" (यजु० ४०।६) "स्कम्भ इदं स त्मन्वद्" (अर्थ० १०।४।२।२) "एकस्तथा सर्व न्तरात्मा" (कठ० ५।११) "य इमं च लोकं परं च सर्वाणि च भूतानि योऽन्तरो यमयति" (बृ० ३।७ "तेनेदं पूर्णं पुरुषेण सर्वम्" (श्वे० ३।८) "प्रत्यङ् स्तिष्ठति सर्वतोमुखः" (यजु० ३२।४) "एष हि लोकेषु भाति" (छां० ४।१५।४) "स वा अयं सर्वासु पूर्षु पुरिशयः" (बृ०२।५।१८) सर्वात्मानं स विभुत्वात्" (श्वे० ३।२१) "स ओतः प्रोतश्च प्रजासु" (यजु० ३२।८) यो वै भूमा तत् सुखम्" (छां २३।१) "सर्वव्यापिनमात्मानम्" (श्वे० १।१६) "दि हमेतं पुरुषं महान्तम्" (यजु० ३१।१२) "अज अन महान् ध्रुवः" (बृ० ४।४।२०) "स वा एष मह आत्मा" (बृ० ४।४।२५) इति । न च सर्वस्थानस्य हृ स्थानत्वं महत्परिमाणस्य चाल्पत्वं कथञ्चिदुपपद्यते । प्रत्यगा "हृदि ह्येष आत्मा" (प्र० ३।६) "योऽयं विज्ञा प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" (बृ० ४।३।७) "ए रात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संवि (मुं०३।१।९) "वालाग्रशतभागस्य शतधा कल्पितस्य भागो जीवः स विज्ञेयः" (श्वे० ५।८) इत्यादिश्रुतिभ्यो मात्रस्थानोऽणुपरिमाणश्च निश्चीयते । तस्माद्भवति प्रतिपत्तिर्नूनमे ब्रह्मशब्दार्थो न जातु परब्रह्म परमात्मेति । नैतद्वक्तव्यम् त्मनोऽपि तथा व्यपदेशोपपत्तेः । सत्यं सर्वभूतान्तरात्मत्वात् स विभुत्वाच्च परममहत्परिमाणो जगतः कारणं परब्रह्म परमात्मा त तथापि तस्य तथा व्यपदेश उपपद्यते । नह्येष सर्वगतो भवन्

हृदयगतः प्रत्यगात्मगतश्च न भवति । हृदयप्रत्यगात्मनोरपि सर्वान्तःपातित्वात् । हृदयं च न महत् प्रत्यगात्मा चाणुरिति हृदयगतत्वाद् हृदयस्थानः प्रत्यगात्मगतत्वाच्चाणीयानिति निःशङ्कं व्यपदेष्टुं शक्यते । यथा खलु सर्ववसुधाधिपतिः सन्नपि रामोऽयोध्यायां सुखेनोपासितुं द्रष्टुं च शक्यत्वादयोध्याधिपतिरिति व्यपदिश्यते, तथा सर्वगतः सन्नपि जगतां पतिः परमेश्वरो हृदयपुण्डरीके सुखेनोपासितुं द्रष्टुं च शक्यत्वाद् हृदयस्थानोऽणीयानिति च व्यपदिश्यते । नच स वस्तुतो हृदयमात्रस्थानः स्वरूपतो विज्ञानात्मेवाणीयाँश्च विद्यते । नच कया चिद्यपेक्षया तथा व्यपदिश्यमानः परमार्थतस्तथैव किं न स्यादिति वक्तुं पार्य्यते । तस्य व्योमवत्सर्वतो ज्यायस्त्वस्यापि श्रवणात् । यथा हि लोके पृथिव्यादिभूतापेक्षया खलु ज्यायानाकाशस्तथा पृथिव्यादिसर्वलोकापेक्षया परब्रह्म परमात्माऽपि ज्यायान् श्रूयते **"ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः"** (छां० ३ । १४ । ३) इति । नचाकाशवच्छ्रूयमाणस्य ज्यायसस्तस्य तथा व्यपदेशः कथञ्चित्पारमार्थिकः उपपद्यते । तस्मान्मन्तव्यं यथा सर्वगतस्याप्याकाशस्य सूचीपाशाद्यपेक्षमर्भकौकस्त्वमणीयस्त्वं च व्यपदिश्यते तथा परमात्मनोऽपि निचाय्यत्वापेक्षमर्भकौकस्त्वमणीयस्त्वं च व्यपदिश्यते, न पारमार्थिकमिति । तथाच जगतां पतिः परमात्मैवात्र ब्रह्मशब्दार्थो न प्रत्यगात्मेति निष्प्रत्यूहम् ॥७॥

**परब्रह्मणः** परमेश्वरस्य हृदयस्थानत्वं व्यपदिश्यमानमुपश्रुत्य तस्य प्रत्यगात्मन इव सम्भोगप्राप्तिमाशङ्कमानं कञ्चित् पार्श्वस्थं व्युदस्यति—

## "सम्भोगप्राप्तिरितिचेन्न वैशेष्यात्" ॥ ८ ॥

अर्भकौकस्त्व इति सप्तम्या विपरिणम्यानुवर्तते । **सम्भोगप्राप्तिः**=ब्रह्मणोऽर्भकौकस्त्वे=हृदयस्थानत्वे प्रत्यगात्मवत्सुखदुःखोपभोगप्रसक्तिरिति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः ? **वैशेष्यात्**=विशेषो भेदः, प्रत्ययप्रयोगेण तस्यौपाधिकत्वं निराक्रियते, भेदादित्यर्थः ।

**अथोच्येत**—हृदयस्थानो हि प्रत्यगात्मा सुखदुःखयोरुपभोक्ता तावद-

भ्युपेयते, जगतः कारणं परब्रह्म परमेश्वरोऽपि चेद् हृदयस्थानेऽ-
म्येत, तदाऽवश्यं तस्य प्रत्यगात्मवत् सुखदुःखयोरुपभोगः प्रस-
नहि दहनागारे स्थाणुरेको दह्यते नापर इति सम्भवति । स्थान-
भोगाविशेषस्याप्यौचित्यादिति । नैतद्वक्तव्यम् । स्थानावि-
कर्माभावाद् भोगाप्रसक्तेः । कर्मनिबन्धनो हि सर्वत्र भोगः न
जातु स्थाननिबन्धनः । चेदसौ स्थाननिबन्धनः प्रवर्तेत तदा
परमात्मनोऽपि प्रसज्येत । कर्म च प्रत्यगात्मन उपपद्यते न परमा-
शरीरसम्बन्धाभावात् । शरीरसम्बन्धाद् हि चेतनस्तावत्कर्मसुविधि-
अधिक्रियमाणश्च शुक्लमशुक्लं वा कर्माशयं सञ्चिनुते । शुक्लाशुक्ल-
सञ्चिन्वानश्च यथासमयं सुखं दुःखं वा तत्फलमुपभुङ्क्ते । शरीर-
श्चास्याविद्यामूल इति सर्वतन्त्रसिद्धान्तः । न च भगवतस्तस्याविद्या
इति वक्तुं शक्यते । अनीश्वरत्वप्रसङ्गात् । तदभावे च न श-
म्बन्धः । शरीरसम्बन्धाभावे च न कर्म । कर्माभावे च न
इति स्थानाविशेषेऽपि न भोगप्रसक्तिः । वैशेष्याच्च । य-
प्रत्यगात्मा परमात्मनः सकाशादुपाधितो विशिष्येत तदोपा-
दुपधेयैक्यस्यावश्यकतया प्रत्यगात्मन इव तस्यापि सुखदुःखो-
आशङ्क्येत । न च प्रत्यगात्मपरमात्मनोरौपाधिको विशेषो वक्तुं पा-
अविद्याया उपाधेर्विद्यास्वभावे भगवति तस्मिन्नवस्थातुमशक्यत्वाद्
न्तरस्य च दुर्निरूप्यत्वादौपाधिकभेदासिद्धेः । न चानयोः परमार्थतो
षेऽन्यस्य कर्मणाऽन्यस्योपभोगः शङ्कितुमीश्यते । अतिप्रसङ्गात् । आ-
स्वरूपो हि परमात्मा, प्रत्यगात्मा च नानन्दस्वरूपः, सर्वज्ञः सर्व-
गतः कारणं च परमात्मा, प्रत्यगात्मा च न तथा, क्लेशकर्मविपाके-
परामृष्टः परमात्मा, प्रत्यगात्मा च तत्परामृष्टः, परममहत्परिमाण-
मात्मा, प्रत्यगात्मा चाणुपरिमाण इति पारमार्थिकस्तयोर्विशेषो
पारमार्थिके च तस्मिन् गम्यमाने स्थानभेदाभावेऽपि न विज्ञा-
भोगेन जगत्पितुः परमात्मन उपभोगप्रसङ्गो युज्यते । तदेतद्
मन्त्रो दर्शयति "द्वा सुपर्णा सयुजा सखाया समानं

परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" ( ऋ० २ । ३ । १७ । २० ) इति । पर्णं=पक्षः, ते सुष्ठुनी शोभने विद्येते यस्य, स पक्षिविशेषः सुपर्णः । तत्सामान्यात् प्रत्यगात्मा परमात्मा चापि सुपर्णा इहोपन्यस्येते । तयोर्ज्ञानशक्तिर्दक्षिणः पक्षः, क्रियाशक्तिश्चोत्तरः । यथा हि लोके खलु कोऽपि सुपर्णो नान्तरेण दक्षिणोत्तरपक्षाभ्यामात्मनीनां गगनोड्डयनलक्षणां क्रियामभिनिर्वर्त्तयितुं पारयते तथा प्रत्यगात्मपरमात्मानावपि ज्ञानक्रियाशक्तिलक्षणाभ्यां दक्षिणोत्तरपक्षाभ्यामन्तरेण नात्मनीनां जगन्निर्वहनलक्षणां क्रियामभिनिर्वर्तयितुं पारयेते । तौ चैतौ द्वा="सुपां सुलुक्०" (अष्टा० ७ । १ । ३९) इत्यादिना द्विवचनौकारस्याकारादेशः । एवमग्रेऽपि द्रष्टव्यः, द्वौ नैकौ, नैकात्मानाविति यावत् । अनेनैकात्मवादो व्युदस्यते । सयुजा=सयुजौ समानयोगौ, योगः सम्बन्धः, स्वसत्तासमानसत्ताकसम्बन्धौ सदातनसम्बन्धकाविति यावत् । नियम्यः खलु शरीराध्यक्षः प्रत्यगात्मा, तस्य परमात्मना, नियामकश्च जगत्पतिः परमात्मा, तस्य प्रत्यगात्मना नियम्यनियामकभावलक्षणः सम्बन्धः सदातनः । सम्बन्धिनोः सदातनत्वे तत्सम्बन्धस्यापि सदातनत्वौचित्यात् । न तयोरागन्तुकः सम्बन्धः, किन्तु सांसिद्धिक इति च तदभिप्रायः । अनेन हि प्रत्यगात्मपरमात्मनोरौपाधिको भेदो न पारमार्थिक इति मतं पराक्रियते । तस्यौपाधिकत्वे तादृक्सम्बन्धानुपपत्तेः । अयमेव च स्वस्वामिभावः सम्बन्ध इत्याख्यायते । सखाया=सखायौ समानख्यानौ, चैतन्यलक्षणः प्रकाशः ख्यानं, तदनयोः समानं विद्यते । यथा हि परमात्मा चेतनस्तथा प्रत्यगात्माऽपि चेतनः । चैतन्यमुभयत्राविशिष्टम् । अनेन हि प्रत्यगात्मपरमात्मनोः सर्वथा वैशिष्ट्यं पराणुद्यते । चैतन्येनावैशिष्ट्यं तयोर्न ज्ञात्वानन्दत्वेनेत्येतदपि ध्वन्यतेऽनेनेति द्रष्टव्यम् । समानम्=एकम् । वृक्षं=यो वृश्च्यते छिद्यते भिद्यते स वृक्षस्तम् । व्यष्टौ तेन देह उच्यते । तस्य छेदो भेदश्च प्रसिद्धः । अत्र तत्स्थं हृदयं लक्ष्यते । समष्टौ च प्रकृतिः । सा हि विकारजातमनुपतन्ती तदुच्छेदेनोच्छिद्यते भिद्यते चेति युक्तं तस्या अपि

वृक्षत्वम् । परिषस्वजाते=व्यत्ययेनात्मनेपदम्, परिष्वजतः, प्रकृतिपक्षे भोग्यत्वेन प्रत्यगात्मा, नियम्यत्वेन च परमात्मेति प्रत्यगात्मा हि भोक्ता, जगत्पतिः परमात्मा च नियामकः नियम्या च प्रकृतिरिति तयोस्तथा तत्समाश्रयणमुपपद्यते । प्रत्यगात्मपरमात्मनोरन्यः=प्रत्यगात्मा स्वादु=तदेतदुपलक्षणं, पिप्पलं=शुक्लाशुक्लकर्मजन्यं सुखदुःखात्मकं फलमत्ति=भुङ्क्ते । पार्जितं तत्तस्य स्वादु नापरस्येति स्वादुग्रहणेन सूच्यते । स्वं कर्मफलं वा प्रत्येकमुपभोक्तव्यमित्यभिप्रायः । अन्यः=परमात्मा पिप्पलमभुञ्जानोऽभिचाकशीति=साक्षित्वेनाभितो निरीक्षत इति अनेन हृदयस्थानत्वेऽपि जगत्पतिः परमात्मा मात्रयाऽपि भोगेन न संस्पृश्यत इति स्फुटं विज्ञायते । तदिदं च भगवतः र्लक्षणसूत्रादप्यभिव्यज्यते "**क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः**" ( यो० १ । २४ ) इति । **तथा च** शाण्डिल्यविद्यायां "**सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत**" ( छां० ३ । १४ । १ ) इति ब्रह्मशब्दः परम उपादीयते न प्रत्यगात्मवचन इति सिद्धम् ॥ ८ ॥

**पूर्वसूत्रे** ब्रह्मणो भोक्तृत्वं प्रतिषिद्धम् । तत्सामान्याद् मा नाम प्रतिषिद्धं वेदीदिति तत्प्रतिपादयितुमधिकरणान्तरमारभ्यते ।

### "अत्ता चराचरग्रहणात्" ॥ ९ ॥

ब्रह्मेत्यधिक्रियते । **अत्ता**=कठवल्ल्यामवगतोऽत्ता परब्रह्म प्रतिपत्तव्यः, कुतः ? **चराचरग्रहणात्**=तदत्तव्यत्वेन जगत उपादानादित्यर्थः ।

कठवल्ल्यां हि श्रूयते "**यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः**" ( कठ० २ । २५ ) इति । यस्य ब्रह्म च क्षत्रं च=उपलक्षणं ब्रह्मक्षत्रादि समस्तं चराचरं जगदोदनः=ओदनस्थानीयं मृत्युः=

कालश्चोपसेचनं=स्वयमद्यमानं भवदन्यस्यात्ममिश्रस्यादने हेतुरोदनमिश्रघृतवदिति यावद् भवतः=भवति विद्यते, तं **"नाविरतो दुश्चरितात्"** (कठ० २ । २४) इति पूर्वश्रुतिप्रकाशितोपायवान् यथा वेद, इत्था=इत्थम्—एवं कः=अन्यस्तद्रहितः को वेद=जानाति, यत्र स वर्तत इत्यर्थः । अत्र ब्रह्मक्षत्रादीनामोदनोपसेचनतानिर्देशेन तत्सामर्थ्याद् यस्येति यच्छब्दनिर्दिष्टस्यात्तृत्वमवगम्यते । सोऽयमवगतोऽत्ता किं जीवात्मा स्यात् आहोस्वित् परमात्मेति संशयः । कुतः संशय्यते ? विशेषानवगमात् । नह्यत्र कश्चिदत्ता विशेषतोऽवगम्यते । सामान्यतोऽवगते च तस्मिन् युक्तः संशयः । सर्वत्र सामान्यावगतेरेव संशायकत्वाभ्युपगमात् । तत्र जीवात्मेति पूर्वः पक्षः, परब्रह्म परमात्मेति सिद्धान्तः । किं तावत् प्राप्तम् ? जीवात्मेति निगदामः । अत्तृत्वस्य तद्धर्मत्वावधारणात् । अत्तृत्वं हि भोक्तृत्वम् । तच्च पूर्वस्मिन् सूत्रे प्रत्यगात्मनो धर्मोऽवध्रियते न जगत्पितुः परमात्मनः । शास्त्रतश्च । शास्त्रं खलु भोक्तृत्वं प्रत्यगात्मनो धर्ममनुशास्ति **"तयोरन्यः पिप्पलं स्वाद्वत्ति"** (ऋ० २ । ३ । १७ । २०) इति । परमात्मनश्च प्रतिषेधति **"अनश्नन्नन्यो अभिचाकशीति"** (ऋ० २ । ३ । १७ । २०) इति । तेन प्रत्यगात्मैवात्ता न परमात्मेति गम्यते । अनुभवाच्च । यथा हि शास्त्रं तावदर्थं प्रतिपादयति तथाऽनुभवोऽप्यवगमयति । समानो ह्युभयोरर्थप्रतिपादने व्यापारः । लोके प्रत्यगात्मैव सर्वमदनीयमुपभुञ्जानोऽनुभूयते न परमात्मा । न च जायमानोऽयमनुभवोऽपह्नोतुं शक्यते । प्रत्यक्षत्वेन बलीयस्त्वात् । यथा हि प्रत्यगात्मना खलु स्वकाः स्त्रीपुत्रादयश्चेतना अचेतनाश्च क्षेत्रप्रभृतय उपभुज्यन्ते तथा ब्रह्मक्षत्रपूर्वकाः सर्वे चेतनाचेतनात्मानः पदार्था अप्युपभोक्तुं शक्यन्ते । योगमाहात्म्याद्दीर्घायुष्ट्वलाभे श्रूयमाणो मृत्यूपभोगोऽपि समुपपद्यते । **"क इत्था वेद यत्र सः"** इति च प्रत्यगात्मनः सूक्ष्मत्वाद् दुर्विज्ञेयत्वमभिप्रेत्य निर्दिश्यते । यत्रेदमाम्नातं पुरस्तात् **"देवैरत्रापि विचिकित्सितं पुरा न हि सुविज्ञेयमणुरेष धर्मः"** (कठ० १ । २१) इति, न ज्ञानाभावमभिप्रेत्य ।

तज्ज्ञानसाधनोपदेशस्यासकृच्छ्रुतेः । तस्मादिह जीवात्मैवात्ता प्रति
परमात्मेति । **एवं** प्राप्ते ब्रूमहे—**अत्ता** खल्विह परमात्मैव
त्तव्यो न जीवात्मा । तस्य सर्वात्तृत्वासम्भवात् । यदि हि भोक्तृ
मभिप्रेयेत, तदा मुक्तसंशयं जीवात्मैवात्ता प्रतिपद्येत । न चेह
मत्तृत्वमभिप्रेतं विज्ञायते । नहि तस्मिन्नभिप्रेते मृत्युनोपसि
ब्रह्मक्षत्रपूर्वकस्य चराचरस्यास्य कृत्स्नस्य जगत ओदनवददनीयत्व
कथञ्चिदुपपद्यते । न च ब्रह्मक्षत्रादिकं कृत्स्नं जगत् प्रत्यगात्म
साक्षाद्भोग्यमपि विद्यते **किन्तु** भोगायतनतया किञ्चिद् यथा
भोगसाधनतया च किञ्चिद् यथा स्त्रीपुत्रादिकम्, ओदनश्च साक्षाद्भो
कृत्स्नस्य तस्य तत्त्वं श्रावयन्त्या श्रुत्या तदत्तृत्वसमकक्षमेवात्तृत्वमिह
न जातु शरीरस्त्रीपुत्रभोक्तृत्वसमकक्षमिति स्फुटमवगम्यते ।
च भक्षितृत्वमिति युक्तं मन्यामहे । धात्वर्थानुगमात् । तच्च
पर्य्यवस्यति न भोक्तृत्व इति सर्वजनीनम् । प्रत्यगात्मनश्च कति
त्तृत्वसम्भवेऽपि न मृत्यूपसेचितब्रह्मक्षत्रादिसर्वार्थात्तृत्वं सम्भवति
तत्सामर्थ्याभावात् । परब्रह्मणः परमेश्वरस्य सर्वार्थात्तृत्वं च सर्ववित्
त्वात् सिद्धमेव न किञ्चित् साधनमपेक्षते । अतएव च भग
प्रलयवेलायां प्रदीप्तेऽग्नौ घृतमिव होता जगदधिपतिः परमात्माऽपि
चराचरं सकलं जगदात्मनि जुह्वदिवोपदिश्यते "**य इमा विश्वा**
**वनानि जुह्वद् ऋषिर्होता न्यसीदत् पिता नः**" (ऋ
३ । १६ । १ ) इति । तैत्तिरीयाश्चैतदेवादनमभिसंवेशननाम्ना
तराश्च संहारनाम्ना व्यपदिशन्ति "**यतो वा इमानि**
**जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसं**
**न्ति तद्विजिज्ञासस्व**" ( तै० ३ । १ ) "**एकैकं जालं**
**विकुर्वन्नस्मिन् क्षेत्रे संहरत्येष देवः । भूयः सृष्ट्वा**
**तथेशः सर्वाधिपत्यं कुरुते महात्मा**" ( श्वेता० ५
इति । तथेशो महात्मा सर्वं संहरति भूयः सृष्ट्वा च सर्वाधिपत्यं
इत्युत्तरार्धान्वयः । "**अनश्नन्नन्यो अभिचाकशीति**" (ऋ

३। १७। २०) इति च परमात्मनः कर्मफलभोक्तृत्वं प्रतिषिध्यते। सन्निहितत्वात्। न सर्वविकारसंहर्तृत्वम्। वेदोपनिषत्सु सर्वत्र सृष्टि-स्थितिसंहारकारणत्वेन भगवतस्तस्य प्रसिद्धत्वात् **"क इत्था वेद यत्र सः"** इति निर्दिश्यमानं दुर्विज्ञेयत्वं च सूक्ष्मतरत्वाद् ब्रह्मणोऽप्युपपद्यते-तराम्। यत्रेदमाम्नातम्। **"बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति"** (मुं० ३। १। ७) इति। तस्मादिहा-वगतोऽत्ता परब्रह्म परमात्मैव प्रतिपत्तुमुचितो न प्रत्यगात्मा॥ ९॥

**ननु** कस्मात्पुनरिहावगतोऽत्ता परब्रह्म परमात्मैव प्रतिपत्तुमुचितो न प्रत्यगात्मा? तत्राह—

**"प्रकरणाच्च"** ॥ १०॥

ब्रह्मेत्यधिक्रियते। पूर्वत्रैवायं हेतुरिति चार्थः। **प्रकरणात्**=प्रक्रिया प्रकरणं, तस्मात् परब्रह्म परमात्मैवात्ता प्रतिपत्तव्य इत्यर्थः।

**यथा** हि लिङ्गमर्थप्रतिपत्तिसाधनं तथा प्रकरणमपि तत्प्रतिपत्तिसाधनं मन्यते। प्रकरणं चेदं परमात्मनो न प्रत्यगात्मनः। **"तं दुर्दर्शं गूढमनुप्रविष्टम्"** (कठ० २। १२) इति प्रत्यगात्मसाक्षात्कारोपायस्या-ध्यात्मयोगस्य हर्षशोकनिवृत्तिलक्षणस्य च तत्फलस्य निरूपणानन्तरम् **"एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः"** (कठ० २। १३) इति तत्प्रकरणं परिसमाप्य **"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मा-त्कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद"** (कठ० २। १४) इति परमात्मस्वरूपप्रतिपिपादयिषया तद्गोचरप्रश्नोत्थानात्। पूर्वस्मिन् श्रुतिवाक्ये ह्यध्यात्मयोगेन कृतात्मसाक्षा-त्कारस्य भगवतो योगिनः सांसारिकहर्षशोकयोर्निवृत्तिमभिधाय मोदनीय-ब्रह्मप्राप्त्या शाश्वतिको मोदः, स च त्वादृक्षस्य विशिष्टाधिकारिणो नचिके-तसः सुलभ इत्युपदिश्यते। तत्र कीदृशं तन्मोदनीयं ब्रह्म, किञ्च तत्प्राप्ति-साधनमिति तदुपश्रुत्य सञ्जाता शिष्यस्य तस्य तीव्रा जिज्ञासा तद्गोचर-

प्रश्नोत्थाने बीजमिति द्रष्टव्यम् । अग्रे च **"सर्वे वेदा यत्पदमामन"** (कठ० २ । १५) इत्युपक्रम्य यथाप्रश्नं ब्रह्मप्रतिपादनादध्याय पर्य्यन्तं ब्रह्मप्रकरणं विस्पष्टम् । **"न जायते म्रियते वा विप"** (कठ० २ । १८) इत्यादिवाक्यद्वयेन च मध्ये सिंहावलोकि ब्रह्मलोके महीयमानस्य जीवात्मनः स्वरूपं प्रतिपाद्यते न प्रकर प्रायेणेति मन्यते । परब्रह्मणः परमेश्वरस्य शरीराभावेन तद्द्वारा मानताप्रतिषेधानुपपत्तेः । **"उभौ तौ न विजानीतः"** (कठ० इत्युक्ताया हन्तृहन्तव्यताभ्रान्तेश्च तदाश्रयत्वायोगेन जीवात्मन्येवे तदनन्तरं च ब्रह्मनिरूपणमतिरोहितमिति न तत्प्रकरणं वि प्रकरणिग्रहणं च सर्वत्र न्याय्यं पश्यामः । अन्यथा प्रकृतहानाप्र स्याताम् । तच्चायुक्तम् । **तस्मा**दिहावगतोऽत्ता परब्रह्म भवितुमर्हति न प्रत्यगात्मेति सिद्धम् ॥ १० ॥

**सम्प्रति** प्रसङ्गादुपस्थितं तत्प्रकरणकं श्रुत्यन्तरं निर्णेतु करणान्तरमारचयति—

**"गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्"** ॥ ११

हिरवधारणे । **गुहां प्रविष्टौ**=कठवल्ल्यामृतपातारौ हृ प्रविष्टौ हृदयगुहां श्रितौ यौ समाम्नातौ, ताव**ात्मानौ**=जीव त्मानौ, **हि**=एव प्रत्येतव्यौ, कुतः ? **तद्दर्शनात्**=तयोर्हृदयगुह सर्वत्र श्रुतिषु दर्शनादित्यर्थः ॥

कठवल्ल्यां हि समाम्नायते **"ऋतं पिबन्तौ सुकृतस्य गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो पञ्चाग्नयो ये च त्रिणाचिकेताः"** (कठ० ३ । १) सुकृतस्य=कर्मणो लोके=शरीरे गुहां=हृदयगुहायां परमे=बाह्याका प्रकृष्टे परार्द्धे=जीवात्मा परमात्मा च परः, तस्यार्द्धे स्थाने हार्दे प्रविष्टौ=प्रविश्य स्थितौ कर्मफलमृतं पिबन्तौ=भुञ्जानौ यौ छायातपौ=छायातपसदृशौ ब्रह्मविदः=ब्रह्मतत्त्वविदस्तत्रभवन्त

मिणो वदन्ति=कथयन्ति, ये च पञ्चाग्नयः=वैखानसाः **"ग्रीष्मे पञ्चतपास्तु स्यात्"** ( मनु० ६ । २३ ) इति स्मृतेः, ये च त्रिणाचिकेताः=नाचिकेतो यज्ञाग्निः, गार्हपत्यो दक्षिणाग्निराहवनीयश्चेति त्रयो यज्ञाग्नयो येषां, ते च गृहमेधिनो वदन्तीति श्रुतिपदार्थः । **तत्र संशयः** किमिह सुकृतस्य लोके कर्मफलपातारौ यौ कौचन द्वौ समाम्नातौ तौ बुद्धिजीवात्मानौ स्यातामथवा जीवात्मपरमात्मानाविति । कुतस्तद्गोचरसंशयः ? प्रकृतत्वात् । यथा ह्यत्र जीवात्मा तावत्प्रक्रियते तथा परमात्माऽपि प्रक्रियते । अस्ति पूर्वं जीवात्मगोचरः प्रश्नः **"येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः"** ( कठ० १ । २० ) इति । तथा परमात्मगोचरः प्रश्नोऽपि **"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत् तत् पश्यसि तद्वद"** ( कठ० २ । १४ ) इति । यच्च प्रक्रियते तद्गोचर इह संशयो युज्यते । प्रश्नानन्तरं पृच्छ्यमाननिरूपणस्यैवौचित्यात्, तस्य च संशयपूर्वकत्वनियमात् । **ननु** पूर्वत्रैकाकी जीवात्मा परमात्मा च प्रक्रियमाणावुपलभ्येते । न बुद्धिजीवात्मानौ जीवात्मपरमात्मानौ वा मिलितौ । श्रुतौ च द्विवचनबलेनावश्यं निरूपणीयौ कौचन द्वौ वक्तव्यौ । तौ चान्यौ कौचन सम्भवेतामपि नैतौ द्वौ कर्हिचित्सम्भवतः । प्रत्येकं प्रकृतत्वेऽप्युभयोरप्रकृतत्वात् । अप्रकृतकल्पनस्य चावैशिष्ट्यात् । अतो नेह तद्गोचरसंशयो युक्त इति । **नैष दोषः ।** तत्सहचरितन्यायेनोभयग्रहणसम्भवात् संशयोपपत्तेः । जीवात्मनः सहचारिणी हि बुद्धिः **"आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च"** ( कठ० ३ । ३ ) **"कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः"** ( बृ० ४ । ३ । ७ ) **"सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति"** ( बृ० ४ । ४ । २ ) **"बुद्धेर्गुणेनात्मगुणेन चैव"** ( श्वे० ५ । ८ ) **"द्रष्टा दशि-**

**मात्रः शुद्धोऽपि प्रत्ययानुपश्यः"** (यो० २।२०) श्रुतिस्मृतिभ्यः । परमात्मसहचारी च जीवात्मा **"द्वा सुपर्णा सखाया"** (ऋ० २।३।१७।२०) **"समाने वृक्षे निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा त्यन्यमीशमस्य महिमानमिति वीतशोकः"** (मुं० ३।२) **"एष त आत्माऽन्तर्य्याम्यमृतः"** (बृ० ३।७ इत्यादिवेदोपनिषच्छ्रुतिभ्यः । उभयोरुभयसहचारित्वे चोत्तत्र श्रुतौ **"तत्सहचरितातत्सहचरितयोस्तत्सहचारि ग्रहणम्"** इति न्यायेन जीवात्मपरिग्रहे तत्सहचारिण्या बुद्धेः परिग्रहे च तत्सहचारिणः प्रत्यगात्मनोऽपि ग्रहणं सम्भवति। ग्रहणसम्भवे चाञ्जस्येन द्विवचनश्रुत्युपपत्त्या तद्गोचरसंशयोऽ नास्ति तदयोगः । **अथोच्येत**—अन्यकल्पनयाऽप्येतदुपपद्यते यानुसरणमिति । **मैवं वक्तव्यम्** । अध्यात्माधिकारे कयोश्चि कल्पयितुमशक्यत्वात् । अध्यात्माधिकारे हि द्विवचनश्रुतिबलेन द्वौ कल्पयितुं शक्येते तदा बुद्धिजीवात्मानावेव जीवात्मपरमात्मानौ कल्पयितुं शक्येते, नान्यौ कौचन । नह्यन्याधिकारेऽन्यं किञ्चित् पार्य्यते । अध्यात्माधिकारश्चायम् । अतस्तत्कल्पनमेव वरं कृतम् कल्पनया । **ननु** तथापि न वयं संशयोपपत्तिमीक्षामहे । प्रत्येकं सम्भवेऽप्युभयत्रासम्भवात् । ऋतपानं हि कर्मफलो सुकृतस्य लोक इति लिङ्गात् । तच्च बुद्धिजीवात्मपक्षे जीवात्मनः वदपि बद्धेर्न सम्भवति । अचेतनत्वात् । नहि चेतनधर्मः धर्मः सम्पद्यते । जीवात्मपरमात्मपक्षे च जीवात्मनः सम्भवेऽपि परमात्मनो न सम्भवति । **"अनश्नन्नन्यो अभिचाक** (ऋ० २।३।१७।२०) इति प्रतिषेधात् । श्रुतिश्च पि द्विवचनेन द्वयोः पानं दर्शयति । तस्मादनुपपन्नः संशय इ **दोषः** । छत्रिन्यायेन द्विवचनोपपत्त्या संशयस्याप्युपपन्नत्वात् । छत्रिणो गच्छन्तीत्यत्रैकोऽपि छत्रिशब्दश्छत्र्यच्छत्र्युभयसाधा

ज्यते तथाऽत्राप्येकः पिबतिशब्दः पिबदपिबदुभयसाधारणः प्रयुज्यते । तस्योभयत्र तथा प्रयोगे चैकेनापि पिबता सता पिबन्ताविति द्विवचनमुपपद्यते । प्रयोज्यप्रयोजकभावेन वा पिबन्ताविति द्विवचनमुपपादनीयम् । ऋतं हि जीवात्मा तावत् पिबति, परमात्मा च तं पाययति । पाने च कर्तृत्वाविशेषाद् यथा पिबन् जीवात्मा पिबतीत्युच्यते तथा पाययन्नीश्वरोऽपि पिबतीति वक्तुं शक्यते । नहि पानक्रियायां स्वातन्त्र्यलक्षणं कर्तृत्वं यथा पातुर्जीवात्मनो विद्यते तथा पाययतुर्जगत्पितुः परमात्मनो न वर्तेत इति केनचिदभिधातुमुत्सह्यते । बुद्धिजीवात्मपक्षेऽपि चैधांसि पचन्तीतिवत् करणे कर्तृत्वोपचारात् पिबन्ताविति द्विवचनमुपपद्यते । तदुपपत्तौ च किमिह सुकृतस्य लोके गुहां प्रविष्टौ कर्मफलपातारौ बुद्धिजीवात्मानौ स्यातां जीवात्मपरमात्मानौ वेति संशयोऽप्युपपन्नः । **तत्र** बुद्धिजीवात्मानाविति पूर्वः पक्षः । जीवात्मपरमात्मानाविति सिद्धान्तः । **यदा** बुद्धिजीवात्मानौ **तदा** बुद्धिप्रधानात् कार्य्यकरणसङ्घाताद्विलक्षणो जीवात्मेति पूर्वपक्षे, **यदा** च जीवात्मपरमात्मानौ **तदा** जीवात्मनो विलक्षणः खलु परमात्मेति सिद्धान्ते फलम् । किं तावत् प्राप्तम्? बुद्धिजीवात्मानाविति निगदामः । कर्मगोचरताऽभिधानात् । सुकृतस्य लोक इति हि कर्मगोचरताऽभिधीयते । सुकृतस्य दुष्कृतस्य वा कर्मणो गोचरता च जीवात्मनो वर्तते **"यथाकारी यथाचारी तथा भवति । साधुकारी साधुर्भवति पापकारी पापो भवति । पुण्यः पुण्येन कर्मणा भवति पापः पापेन । अथो खल्वाहुः काममय एवायं पुरुष इति । स यथाकामो भवति तत्क्रतुर्भवति, यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते"** (बृ० ४ । ४ । ५) इत्यादिश्रुतेः, न परमात्मनः **"स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान्"** (बृ० ४ । ४ । २२) इत्यादिश्रुतेः । गुहां प्रविष्टाविति विशेषणाच्च । हृदयं ह्यत्र गुहा विवक्ष्यते । तां च बुद्धिक्षेत्रज्ञौ प्रवेष्टुमर्हतो न परमात्मा । नहि सर्वगतस्य परिच्छिन्नदेशप्रवेशः कल्पयितुं शक्यते ।

लोके च परिच्छिन्नं प्रविशन्निरीक्ष्यते न सर्वगतम् । परिच्छिन्नौ क्षेत्रज्ञौ सर्वगतश्च परमात्मेति न तत्परिग्रहोऽत्र युज्यते । छाया... च निर्देशात् । बुद्धिर्हि जड़त्वादत्र छायात्मना निर्दिश्यते, जीव... चेतनत्वादातपात्मना, सङ्गतश्चैवमेष निर्देशः । अन्यथाऽसाङ्गत्य... नहि स जीवात्मपरमात्मपक्षे कथञ्चित्सङ्गच्छते । द्वयोश्चेतनत्वेन... छायात्वानुपपत्तेः । तस्मादिह कर्मफलभोक्तारौ बुद्धिजीवात्मानौ... मर्हतो न जीवात्मपरमात्मानाविति । **एवं** प्राप्ते प्रतिविधीयते-... **त्मानौ हि तद्दर्शनात्** । ऋतं पिबन्ताविति समाम्नातं ता... प्रत्यगात्मनो धर्मो न बुद्धेन वा जगत्पितुः परमात्मन इति नि... प्रत्यगात्मा चैकत्वात् सहचारित्वाविशेषेऽपि परमात्मनैव ... सम्पत्तुमर्हति न बुद्ध्या । नहि सरूपे विद्यमाने सहचारिणि... तादृशा विरूपेण कश्चित् सद्वितीयः सम्पद्यमानो निरीक्ष्यते । ... गोर्द्वितीयोऽन्वेष्टव्य इत्युक्ते केनचिदश्वो द्वितीयोऽन्विष्यते न... क्वचिदवलोक्यते । सरूपश्च प्रत्यगात्मनः परमात्मा चेतनत्वाद्... च बुद्धिः । अचेतनत्वात् । न च तत्र कर्तृत्वोपचारोऽपि ... मुख्यकर्तृत्वसम्भवे करणे कर्तृत्वोपचारकल्पनस्यायुक्तत्वात् । ... प्रत्ययार्थत्वेन प्राधान्यादुपचरितमपि न शक्यते । गुणप्र... गुणे तत्प्रवृत्तेरङ्गीकारात् । **अत एवाहुर्न्यायविदः "गुणे** ... **व्यकल्पना"** इति । परमात्मनि च प्रयोजकत्वान्मुख्यं ... पपद्यते नास्त्युपचारकल्पनावकाशः । पिबतिश्चाजहत्स्वार्थ... तस्मिन्नुपचरितुं पार्य्यते । गुणत्वात् । सुकृतस्य लोके गुहाप्रवे... कर्माभावेऽपि सर्वगतत्वादुपपद्यते । नहि सर्वगतः सर्वत्र भवन् ... न भवतीति सङ्गच्छते । श्रुतयश्च हृदयगुहाश्रयत्वं प्रत्यगात्म... त्मनश्चोभयोः समानं दर्शयन्ति **"तं दुर्दर्शं गूढमनुप्रविष्टं** ... **हितं गह्वरेष्ठं पुराणम्"** ( कठ० २ । १२ ) इति प्रत्य... **गूढं**=छन्नं यथा भवति तथाऽनुप्रविष्टम् । **गुहाहितं**=... स्थितम् । **गह्वरे**=अनेकानर्थसङ्कटे तिष्ठतीति गह्वरेष्ठम् । पुरा...

न्तनम् । **"योऽयं विज्ञानमयः प्राणेषु हृदयान्तर्ज्योतिः पुरुषः"** (बृ० ४ । ३ । ७) इति च । **प्राणेषु**=अभिव्याप्तौ सप्तमी, प्राणैरभिव्याप्यः । प्राणा इन्द्रियाणि । **"वेनस्तत् पश्यन्निहितं गुहा सद्"** (यजु० ३२ । ८) **गुहा**=गुहायाम् । **"पश्यत्स्विहैव निहितं गुहायाम्"** (मुं० २ । १ । ७) **"आविः सन्निहितं गुहाचरं नाम"** (मुं० २ । २ । १) **"यो वेद निहितं गुहायाम्"** (तै० २ । १) **"एष म आत्माऽन्तर्हृदये"** (छां० ३ । १४ । ३) **"स वा एष आत्मा हृदि"** (छां० ८ । ३ । ३) **"य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते"** (बृ० २ । १ । १७) इत्याद्याश्च परमात्मनः । छायातपाविति च निर्देशो जीवात्मपरमात्मपक्षेऽपि सूपपद्यते । जीवात्मा हि चेतनत्वात् प्रकाशस्वरूपः सन्नप्यविद्याश्रयत्वाच्छायात्मना निर्दिश्यते, परमात्मा च तदनाश्रयत्वादातपात्मनेति नास्ति तत्र काचिदनुपपत्तिः । तस्मादृतपातारौ हृदयगुहाप्रविष्टौ यौ द्वौ समाम्नातौ तौ जीवात्मपरमात्मानौ भवतः ॥ ११ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"विशेषणाच्च"** ॥ १२ ॥

गुहां प्रविष्टावात्मानावित्यनुवर्तते । पूर्वत्रैवायं हेतुरिति चार्थः । **विशेषणात्**=विशेषणं भेदनं भेदेन निरूपणं, तस्मात्—उत्तरत्र विभिद्य निरूपणात् प्रतिपद्यते नूनं गुहां प्रविष्टौ जीवात्मपरमात्मानौ भवत इत्यर्थः ।

यौ हि पूर्वं समुच्चित्य निरूप्येते तावेव प्रतिपत्तिसौकर्य्यार्थमुत्तरत्र विशिष्य निरूप्येते इत्यस्ति शास्त्रविदां परामर्शः । उत्तरत्र च जीवात्मपरमात्मानावेव विशिष्य निरूप्यमाणौ दृश्येते **"यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् । अभयं तितीर्षतां पारं नाचिकेतं शकेमहि"** (कठ० ३ । २) इति परमात्मा । ईजानानाम्=ईजितिकर्मा । नाचिकेतं=नाचिकेतकर्मणा प्राप्यम् । **"आत्मेन्द्रियम-**

**नोयुक्तं भोक्तेत्याहुर्मनीषिणः"** (कठ० ३ । ४)
जीवात्मा । नहि पूर्वत्र बुद्धिजीवात्मनोराम्नानेऽनन्तरं
जीवात्मपरमात्मनोर्विशिष्य निरूपणं कथञ्चित् सङ्गच्छते ।
**"उत्तिष्ठत जागृत प्राप्य वरान् निबोधत । क्षुरस्य
निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति ।
अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्यु
प्रमुच्यते"** (कठ० ३ । १४–१५) इति तद्बोचर उप
घटते । स्पष्टं चेह संसारदुःखादात्मानं मोचयितुकामानां
परमात्मा तद्बोद्धा जीवात्मा चेत्युभयमुपसंह्रियते । सर्वत्रोपक्रमो
योश्चैकवाक्यत्वं न्याय्यम् । प्रकरणं चेदं परमात्मनः सुव्यक्तम् ।
**विदो वदन्ति"** इति लिङ्गमपि चैतदुपोद्बलयति । तस्माद्
प्रविष्टौ जीवात्मपरमात्मानौ स्त इति सिद्धम् ॥

कश्चित्तु **"विशेषणाच्च"="ब्रह्मविदो वदन्ति"** इति
षणोपादानाच्चेह हृदयगुहाप्रविष्टौ जीवात्मपरमात्मानौ गम्येते
पयति । तस्य च विशेषणमिदं बुद्धिजीवात्मपरिग्रहे नोपपद्यते
परमात्मपरिग्रहे तु तदुपपत्तिरतिरोहितेत्याकूतम् ॥

एष एव न्यायः **"द्वा सुपर्णा सयुजा सखाया**
३ । १ । १ ) इत्येवमादिवाक्येष्वपि योजयितव्यः । तत्रापि
त्मपरमात्मानावेव रूपकेण सुपर्णावुच्येते नान्यौ प्राकृतौ कौचन ।
त्माधिकारे तद्वचनानौचित्यात् । वाक्यं चेदं व्याख्यातमधस्तात् ।
शेषणाच्च" इत्यस्योदाहरणं तु **"समाने वृक्षे पुरुषो नि
नीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्य
शमस्य महिमानमिति वीतशोकः"** (मुं० ३ ।
इत्यनन्तरं श्रुतिवचनं द्रष्टव्यम् ॥ १२ ॥

हृदयान्तरः परब्रह्म परमात्मा निर्णीतः । अक्षयन्तरं तं निर्णेतुं
करणान्तरमारचयति—

"अन्तर उपपत्तेः" ॥ १३ ॥

ब्रह्मेत्यधिक्रियते । **अन्तरः**=छान्दोग्ये पठितोऽक्ष्यभ्यन्तरः पुरुषः परब्रह्म परमात्मा प्रत्येतव्यः, कुतः? **उपपत्तेः**=अमृतत्वादिगुणजातस्य तत्रैवोपपत्तेरित्यर्थः ।

छान्दोग्ये ह्युपकोसलविद्यायां पठ्यते **"य एषोऽक्षिणि पुरुषो दृश्यते एष त आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति । तद् यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति"** (छां० ४ । १५ । १) इत्यादि । तत्र संशयः किं योऽयमक्ष्यन्तरः पुरुषोऽत्र निर्दिश्यते स जीवात्मा स्यादथवा परमात्मेति । कुतः संशयः? शब्दसामान्यात् । यथा हि पुरुष-शब्दः खलु जीवात्मनि प्रयुज्यमान उपलभ्यते **"एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः"** (प्र० ४ । ९) **"यत्रैतत् पुरुषः स्वपिति नाम"** (छां० ६। ८ । १) **"योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः"** (बृ० ४ । ३ । ७) **"अत्रायं पुरुषः स्वयंज्योतिर्भवति"** (बृ० ४ । ३ । ९) इति, तथा परमात्मन्यपि प्रयुज्यमानो निरीक्ष्यते **"सहस्रशीर्षा पुरुषः"** (ऋ० ८ । ४ । १७ । १) **"दिव्यो ह्यमूर्त्तः पुरुषः"** (मुं० २ । १ । २) **"स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः"** (बृ० २ । ५ । १८) **"यस्मात् परं नापरमस्ति किञ्चिद् यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्"** (श्वे० ३ । ९) इति । अतो युक्तः संशयः । तत्र जीवात्मेति पूर्वः पक्षः, परमात्मेति सिद्धान्तः । किंतावत् प्राप्तम्? जीवात्मेति प्राप्तम् । **प्रसिद्धवदुपदेशात्** । यद्धि वस्तु पूर्वं प्रसिध्यति तदेव एतद्भ्यां सर्वनामशब्दाभ्यां परामृश्योपदिश्यते । नहि नो चेत् प्रसिध्येत् तथा चोपदिश्येतेति युज्यते । प्रसिद्धश्च सर्वस्यात्मत्वाज्जीवात्मा विद्यते न

परमात्मा । **दृश्यत इति प्रयोगाच्च ।** दर्शनमिहैन्द्रियकं
प्रेतमिति गम्यते । प्रसिद्धदर्शनस्यैन्द्रियकत्वनियमात् । प्रयुज्यमा
चरत्वं च जीवात्मनः सम्भवति, न जातु परमात्मनः । तथ
**नसा न मनुते येनाहुर्मनो मतम् । तदेव ब्रह्म त्वं**
(के० १ । ५) **"यत्तदद्रेश्यम्"** (मुं० १ । १ । ६)
द्याभिः श्रुतिभिस्तद्गोचरतायाः प्रतिषेधात् । इह च प्रसिद्धवद्
श्रुतिस्तस्य तद्गोचरतां विस्पष्टं प्रतिपादयति **"य एषो**
**पुरुषो दृश्यते, एष त आत्मा"** (छां० ४ । १
इति । श्रुत्यन्तरेऽपि च जीवात्मगोचरः प्रसिद्धवत्तथोपदे
**"तौ ह प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो**
**एष त आत्मा"** (छां० ८ । ७ । ४) इति । तौ=इन्द्रवि
न च परमात्मगोचर एष भगवतः प्रजापतेरुपदेश इति युक्तं
अग्रे जाग्रदाद्यवस्थातो विविक्तस्य प्रत्यगात्मनो निखिलसाध
निर्वृत्ते ब्रह्मदर्शने जीवन्मुक्तिसुखभोगानन्तरं विदेहमुक्तिवेलाया
**मेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्यो**
**सम्पद्य स्वेन रूपेणाभिनिष्पद्यते"** (छां० ८ । १२ ।
परज्योतिःपरमात्मोपसम्पत्तेर्व्यक्तमनुशासनात् । नहि स्वस्य
रनुशासितुं शक्यते । जीवात्मनस्तु शिष्यमाणा सा घटते ।
**विदाप्नोति परम्"** (तै० २ । १) इत्यादिश्रुतिभ्यस्तथै
अमृतत्वादयो गुणाश्च तत्र कथञ्चिदुपपादयितुं शक्यन्ते ।
स्थानविशेषनिर्देशश्चानुकूलोऽतिरोहितः । तस्मादत्र पठितोऽक्ष्यभ्य
जीवात्मैव प्रतिपत्तव्यो न परब्रह्म परमात्मेति । **एवं** प्राप्तेऽभिधीय
**उपपत्तेः** । परमात्मैवाक्ष्यभ्यन्तरः पुरुषः खल्विह निर्दिष्टो
उपदिश्यमानस्य गुणजातस्य तत्रैवाञ्जस्येनोपपत्तेः । अत्र हि ये ता
भयत्वसंयद्वामत्वप्रभृतयो गुणा उपदिश्यन्ते **"एष आत्मेति**
**तदमृतमभयमेतद् ब्रह्म"** (छां० ४ । १५ । १)
**संयद्वाम इत्याचक्षते, एतं हि सर्वाणि वामा**

यन्ति" (छां० ४ । १५ । २) **"एष उ एव वामनीः, एष हि सर्वाणि वामानि नयति"** (छां० ४ । १५ । ३) **"एष उ एव भामनीः, एष हि सर्वेषु लोकेषु भाति"** (छां० ४ । १५ । ४) इति । तेषाममृतत्वाभयत्वयोर्जीवात्मनि कथञ्चिदुपपत्तावपि संयद्वामत्वादयः परब्रह्मणि परमात्मन्येवाञ्जस्येनोपपद्यन्ते । नहि जीवात्मा संयद्वामो वामनीर्भामनीर्वा कर्हिचित् सम्भवति । कर्मफलोदयहेतुवचनो हि **संयद्वाम**—शब्द इह प्रयुज्यते । **संयन्ति** समुदयं गच्छन्ति **वामानि**=वननीयानि सम्भजनीयानि शोभनानि कर्मफलान्यनेनेति तद्व्युत्पत्तेः । **वामनी**—शब्दश्च प्रतिप्राणिभेदं कर्मफलनयनकर्तरि **भामनी**—शब्दश्च यः स्वयं भासमानः परान् भासयते भानं नयते तत्र प्रयुक्त इत्यपरोक्षम् । परमात्मा च तथा श्रुतिस्मृतिभ्योऽवगम्यते न जीवात्मा **"अहं राष्ट्री सङ्गमनी वसूनाम्"** (ऋ० ८ । ७ । ११ । ३) **"कर्माध्यक्षः सर्वभूताधिवासः"** (श्वे० ६ । ११) **"मया सोऽन्नमत्ति"** (ऋ० ८ । ७ । ११ । ४) **"स वा एष महानज आत्माऽन्नादो वसुदानः"** (बृ० ४ । ४ । २४) **"न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"** (मुं० २ । २ । १०) **"यदादित्यगतं तेजो जगद् भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्"** (गी० १५ । १२) इति । सर्वभूतान्तरात्मतया जगज्जन्मादिकारणतया च परब्रह्म परमात्माऽपि प्रसिध्यतितरामिति तस्य प्रसिद्धवदुपदेशोऽपि न विरुध्यते । दर्शनं चेह न विशिष्टमभिप्रेयते किन्तु दर्शनमात्रम् । तच्च ब्रह्मणोऽप्युपपद्यते । तस्यैन्द्रियकदर्शनाविषयत्वेऽप्यात्मना स्वेन द्रष्टुं शक्यत्वात् । अत एव च **"यत्तदद्रेश्यम्"** इत्युपक्रम्याह श्रुतिः **"यद्भूतयोनिं परिपश्यन्ति धीराः"** (मुं० १ । १ । ६) इति । **"तमात्मस्थं येऽनुपश्यन्ति धीराः"** (कठ० ५ । १२) इति च

श्रुत्यन्तरम् । अक्षिणीति स्थाननिर्देशश्च परब्रह्मणः परमेश्वरस्याप्युपपद्यते । सादृश्यात् । यथा ह्येष सर्वलेपरहितः, यत्रेदमाम्नातं **यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः"** ( कठ० ५ । ११ ) इति, तथाऽक्षिस्थानमपि सर्वलेपरहितमिह निर्दिश्यते **"तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति"** ( छां० ४ । १५ । १ ) इति । सादृश्यनिबन्धने निर्देशेऽभ्युपगम्यमाने भवति कश्चिद्दोषः । परब्रह्म परमात्मैवात्राक्ष्यभ्यन्तरः पुरुषः पठ्यत इति निश्चेतव्यम् ॥

**अत्रैव** हेत्वन्तरं समुच्चिनोति—

**"स्थानादिव्यपदेशाच्च" ॥ १४ ॥**

अन्तर इत्यनुवर्तते । ब्रह्मेति पूर्ववदधिक्रियते । पूर्वत्रैवार्थे चकारेणोच्यते । **स्थानादिव्यपदेशात्**=उपासनव्यपदेशः, व्यपदेशश्चादिपदार्थः, व्यपदेश उपदेश अनुशासनम्, आदि विद्युल्लक्षणस्थानादेरुपदेशाद् गम्यतेऽन्तरः परब्रह्म परमेश्वर इत्यर्थः ।

**गार्ह**पत्यादयो ह्यग्नयः खलु प्रत्येकमुपदेशाय प्रवर्तमाना अप्राणरूपस्य परब्रह्मणः परमेश्वरस्यादित्यं चन्द्रमसं . विद्युदिति च शासित्वाऽनन्तरं यस्यान्तरवस्थानादादित्यादयोऽमी ग्रहोपग्रहभेदा भासन्ते वयं च भासामहे, यत्तेजसा तेजस्विनो भवन्तश्च वयं ततो व्यतिरिक्तं कालत्रयेऽपि मन्तुमीश्महे, अपि च तदेवेति वक्तुं सहामहे, तद् ब्रह्म त्वयोपासितव्यमित्युपासनं तत्फलं चोपदि **"य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि । स य एतमेवं विद्वानुपास्ते अपहते पापकृत्यां भवति सर्वमायुरेति ज्योग् जीवति नास्यावरपुरुषाः क्षीयन्ते"** ( छां० ४ । ११ । १–२ ) इति । अपहते=अ पापकृत्यां=पापं कर्म, लोकी=ब्रह्मलोकाधिकारी, ज्योग्=व्याधिभि

प्रख्यातश्च जीवति=यावद्ब्रह्मलोकप्राप्ति प्राणान् धारयति, अस्य=उपासकस्यावरपुरुषाः=शिष्यप्रशिष्यादयः पुत्रपौत्रादयश्च न क्षीयन्ते=स्वाधिकारान्न प्रच्यवन्ते अब्रह्मोपासका न जायन्त इति यावदिति श्रुतिपदार्थः। न च गार्हपत्यादीनामेष उपदेशस्तावत् परमात्मतो भिन्नगोचरः कथञ्चिदुपपद्यते। तद्भिन्नस्यादित्ये चन्द्रमसि विद्युति च युगपदवस्थानासम्भवात्। नहि तद्भिन्नोऽणुरयं जीवात्मा यदाऽऽदित्येऽवतिष्ठते तदैव चन्द्रमसि विद्युति चावस्थातुं पारयते। न चादित्यचन्द्रमोविद्युतो वा तद्भानेन भान्तुं कल्पन्ते, फलं चैतदुपदिश्यमानं वा तदुपासनस्य कथञ्चित् सङ्गच्छते। ब्रह्मोपासनस्य चैतत्फलं स्वयं दर्शयिष्यति श्रुतिरुपरिष्टात् **"यथा पुष्करपलाश आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यते"** (छां० ४।१४।३) इति। नास्यावरपुरुषाः क्षीयन्ते इति च ब्रह्मोपासनफलं विस्पष्टम्। **"नास्याब्रह्मवित् कुले भवति"** (मुं० ३।२।९) इति श्रुत्यन्तरात्। व्यापकत्वाच्च ब्रह्मणो युगपदादित्ये चन्द्रमसि विद्युति चावस्थानमपि न विरुध्यते। भानं चैषां तद्भानेनासकृदुक्तम् **"तस्य भासा सर्वमिदं विभाति"** (मुं० २।२।१०) इत्यादिना। तस्माद् ब्रह्मगोचरोऽयमुपदेशो गार्हपत्यादीनामिति निर्विवादम्। यस्य खलु परब्रह्मणः परमेश्वरस्यादित्यादिकं स्थानमुपासनं तत्फलं च गार्हपत्यादिभिरग्निभिरनुशिष्यते स एव परमपुरुषो ब्रह्माक्षिण्याचार्य्येणाप्युपदिश्यते। नहि तदनुशिष्टादन्यस्योपदेशे पापापहतिलक्षणफलसामान्यं स्थानसामान्यं च कथञ्चिद् घटते। अक्षिसूर्य्यौ चाध्यात्मिकाधिदैविके चक्षुषी सुप्रसिद्धे। स्थानमात्रभेदेन च उपास्यस्य स्थानिनो भेदो भवितुमर्हति। तस्मादत्र परमात्मैवाक्ष्यभ्यन्तरः पुरुष इति निर्विप्लवम्॥ १४॥

अत्रैव हेत्वन्तरमवतारयति—

**"सुखविशिष्टाभिधानादेव च"॥ १५॥**

अन्तर इत्यनुवर्तते। ब्रह्मेति पूर्ववदधिक्रियते। पूर्वत्रैवायं हेतुरिति

चकारेणोच्यते । पूर्वत्रोपक्रमेऽभिहितस्यैवेहोपसंहारेऽक्षिण्यभिधानं स्येत्येवकारेणावध्रियते । **सुखविशिष्टाभिधानात्**=सुख अभेदोऽत्र वैशिष्ट्यम्, उपक्रमेऽभिहितस्य सुखस्वरूपस्य ब्रह्मणोऽभि धानाद् गम्यते तदन्तरः पुरुषो ब्रह्मेत्यर्थः ।

वाक्योपक्रमे हि सम्भूय गार्हपत्यादिभिरग्निभिरुपकोसलाय "प्राणो **ब्रह्म कं ब्रह्म खं ब्रह्म**" (छां० ४ । १० । ५) इत्युपदेश मुपलभ्यते । अस्यार्थं विज्ञातुमुपकोसलेन "**विजानाम्यहं यत् प्राणो ब्रह्म, कं च तु खं च न विजानामि**" (छां० ४ । १० । ५) इत्युक्ते च "**यद्वाव कं तदेव खं, यदेव खं तदेव कम्**" (छां० ४ । १० । ५) इति तेषां प्रतिवचनं निर्दिष्टम्। अनेन च न खलु खशब्दवाच्यं भूताकाशं कशब्दवाच्यं वैषयिकं सुखं चात्र ब्रह्मोपदिश्यते, किन्तु यत्सर्वस्य जगतः प्राणनक्रियाहेतुत्वात् प्राणम् आकाशवद् व्यापकं सुखस्वरूपं च ब्रह्म, तदेवेहोपदिश्यत इति स्पष्टमे वगम्यते । सामानाधिकरण्यं च प्राणस्वरूपं सुखस्वरूपं व्यापकं च ब्रह्मेति बोधनाय प्रदर्श्यते, न प्राणे के खे च लौकिके ब्रह्मबुद्धिविधानाय, अपसिद्धान्तापातात् । अविद्या हि सा तदा भवेन्न विद्या । विद्यान्तरा चारम्भः "**एषा सोम्य! तेऽस्मद्विद्या**" (छां० ४ । १४ । १) इति विद्यात्वनिगमनाच्च । एतदेव च "**यद्वाव कं तदेव खं, यदेव खं तदेव कम्**" इत्यवधारणेनावबोध्यते । तदेवं वाक्योपक्रमे सुख स्वरूपं ब्रह्माभिहितमिति भवति हस्तामलकायितम् । यदेतत् खलु वाक्यो पक्रमे सुखस्वरूपं ब्रह्माभिहितं तदेव मध्येऽपि प्रत्येकमुपदेशाय प्रवृत्तैः गार्हपत्यादिभिरग्निभिरादित्यादिस्थानेष्वभिधीयते, अन्ते चाचार्येणापि तदेवाभिधातव्यमिति युक्तं प्रतीयते । प्रकृतपरिग्रहस्यैव न्याय्यत्वात्। अन्यथा हि प्रकृतहानाप्रकृतप्रक्रिये स्याताम् । प्रत्येकं च गार्हपत्यादयो ऽग्नयः स्वस्वबुद्ध्यनुसारेण ब्रह्मोपदिश्य "**एषा सोम्य! तेऽस्मद्विद्याऽऽत्मविद्या च**" (छां० ४ । १४ । १) इत्युपसंहरन्तः पूर्वत्र वाक्यो पक्रमे सुखस्वरूपं ब्रह्माभिहितमिति व्यक्तमवबोधयन्ति । "आचार्य

ते गतिं वक्ता" (छां० ४। १४। १) इत्याचार्य्यस्य गतिमात्राभिधानं कीर्तयन्तश्चार्थान्तरविवक्षां वारयन्ति। स्वयमाचार्य्योऽपि च **"लोकान् वाव किल सोम्य! तेऽवोचन्, अहं तु ते तद् वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते"** (छां० ४। १४। ३) इत्यग्नीनां लोकानधिकृत्य वर्तमानस्य पुरुषस्योपदेशमभिधायात्मनोपदेक्ष्यमाणमक्षिस्थानं पुरुषं विजानतः पापेनानुपघातं फलं व्याचक्षाणः स्वोपदिष्टमग्न्युपदिष्टं पुरुषं चैकं दर्शयति। नह्युभयोरनेकत्वे तद्विजानतः पुरुषस्यैकविधं फलमुपदेष्टुं शक्यते। गार्हपत्याद्यग्निभिरादित्यादिस्थानं पुरुषं ध्यायतो यत्पापानुपघातलक्षणं फलमुपदिष्टं तदेवाचार्य्येणाक्षिस्थानं पुरुषं ध्यायतोऽप्यनुशिष्यते। फलसामान्यानुशासनाच्चोभयत्रैकः पुरुषो ध्येय इति सुखेन प्रतिपद्यते। अनेन चादौ मध्येऽन्ते चैकस्यैव परब्रह्मणः पुरुषस्योपदेशात् प्रकरणमपि ब्रह्मैकविद्यागोचरतां बाभज्यमानं संश्लिष्यते। ये तु मध्येऽग्निविद्यामादावन्ते च ब्रह्मविद्यां व्याहरन्ति ते वैदिकैरुपेक्ष्याः। सम्भवति प्रकरणैकत्वे तदनेकत्वकल्पनस्यानौचित्यात्। मध्ये विद्यान्तराभ्युपगमे चोपक्रमोपसंहारयोरैक्यानुपपत्तेः। न च सम्भूयोपदेशाय प्रवृत्ताः खलु गार्हपत्यादयः सुखस्वरूपं ब्रह्मोपदिशन्ति प्रत्येकं प्रवर्तमानाश्चाग्निविद्यामिति सम्भावयितुमपि शक्यते। तस्माद् यदुपक्रमे सुखस्वरूपं ब्रह्माभिहितं तस्यैवेहाचार्य्येणाभिधानात् सिध्यति नूनमक्ष्यभ्यन्तरः पुरुषः परमात्मा॥ १५॥

अत्रैवान्यं हेतुं दर्शयति—

**"श्रुतोपनिषत्कगत्यभिधानाच्च"॥ १६॥**

अन्तर इत्यनुवर्तते। ब्रह्मेति पूर्ववदधिक्रियते। पूर्वत्रैवायं हेतुरिति चकारार्थः। **श्रुतोपनिषत्कगत्यभिधानात्**=श्रवणमनुष्ठानम्, उपनिषद् ब्रह्मविद्या ब्रह्मोपासना, श्रुता—अनुष्ठिता उपनिषत्—ब्रह्मविद्या येन स श्रुतोपनिषत्कः, तस्य या गतिः, तस्या इहाक्षिपुरुषविदोऽभिधानाद् गम्यतेऽक्ष्यभ्यन्तरः पुरुषः परमात्मेत्यर्थः।

या हि खलु भगवतो ब्रह्मविदो ब्रह्मोपासकस्य देवयानाख्या ... कर्ण्यते "अथोत्तरेण तपसा ब्रह्मचर्य्येण श्रद्धया विद्य... त्मानमन्विष्यादित्यमभिजयन्ते । एतद् वै प्रा... मायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुन... न्ते" (प्र० १ । १०) "ये चेमेऽरण्ये श्रद्धा तप ... सते तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्य्य... क्षमापूर्य्यमाणपक्षाद् यान् षडुदङ्ङेति मासाँस्तान् ... मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं ... न्द्रमसो विद्युतं, तत्पुरुषोऽमानवः स एनान् ब्रह्म ... त्येष देवयानः पन्था" (छां० ५ । १० । १-२) "ये ... अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिरभिसम्भवन्त्यर्चि... हरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद् यान् ... सानुदङ्ङादित्य एति, मासेभ्यो देवलोकं देवलो... दित्यमादित्याद् वैद्युतं तान् वैद्युतान् पुरुषो मानस ... ब्रह्मलोकान् गमयति, ते तेषु ब्रह्मलोकेषु पराः प... वसन्ति तेषां न पुनरावृत्तिः" (बृ० ६ । २ । १५) ... "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । ... प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" (गी० ८ ।...) इति च । सैवात्राक्षिपुरुषविदोऽप्यभिधीयमाना दृश्यते "अथ ... चैवास्मिन् शव्यं कुर्वन्ति यदि च न, अर्चिषमे... सम्भवन्ति" इत्युपक्रम्य "आदित्याच्चन्द्रमसं चन्द्रमसो ... द्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष दे... ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाव... (छां०४।१५।५) इति। चेदयं पुरुषः परमात्मा न भवेत्, न ता... गतिरेतद्विदोऽभिधीयेत । नहि यो यन्न भवति तद्विदस्तद्विदां गति... चिदभिधातुं शक्यते । अभिधीयते च । तदिदं भवत्यस्य ब्रह्म... लिङ्गम् । तस्माद् प्रतिपद्यते नूनमक्ष्यभ्यन्तरः पुरुषः परमेश्वर इति ...

सिद्धान्त उपपादितः । **सम्प्रति** पूर्वपक्षं निरस्यन्नाह—

**"अनवस्थितेरसम्भवाच्च नेतरः" ॥ १७ ॥**

अन्तर इत्यनुवर्तते । **अनवस्थितेः**=सर्वदाऽक्षिण्यवस्थानाभावाद-**सम्भवाच्च**=अमृतत्वादिगुणजातस्य सम्भवाभावाच्च **नेतरः**=परमात्मनोऽन्यो जीवात्मा **न**=अक्ष्यभ्यन्तरः पुरुषो न भवतीत्यर्थः ।

**जागरितं** स्वप्नः सुषुप्तिश्चेति तिस्रोऽवस्था जीवात्मनो भवन्ति । ताः सविस्तरमिह तृतीये प्रवक्ष्यन्ते । तासामेष सुषुप्त्यवस्थायां हृद्यवतिष्ठते, स्वप्नावस्थायां हृदयान्मूर्द्धानमभिनिःसृतायां कण्ठगायां नाड्यां, जागरितावस्थायां च मूर्द्धनि । मूर्द्धा भ्रुवोर्मध्यं स्थानं, तत्रावस्थितः सान्निध्यादक्षिणीति व्यपदिश्यते, यथा हृदयस्थे ब्रह्मण्यवस्थितो हृदि सुषुप्त्यवस्थायाम् । यथा हि भगवतः परमेश्वरस्य तावद् द्वयी शक्तिर्वर्तते क्रिया ज्ञानं च, तथा जीवात्मनोऽपि द्वयी शक्तिर्विद्यते क्रिया ज्ञानं च । तत्र क्रियाशक्तिमपेक्ष्य हृदि, ज्ञानशक्तिमपेक्ष्य च मूर्द्धनीति व्यवह्रियते । मूर्द्धन्यवस्थितस्याक्षिणीति व्यवहारश्च बाह्यविषयदर्शनद्वारत्वाद् गवाक्षे सौधस्थस्येवौपचारिको द्रष्टव्यः । न चाणुपरिमाणस्यास्य जीवात्मनो युगपद् हृदयेऽक्षिणि चावस्थानमुपपद्यते । नहि परिच्छिन्नः कश्चिदेकत्रावस्थितोऽन्यत्राप्यवस्थातुमर्हति । योगिनस्तु नानाचेतोभिरनेकत्र वर्तमाना अप्यात्मनैकत्रैवावतिष्ठन्ते न सर्वत्र । **न** चामृतत्वादयो गुणा अपि जीवात्मनि सम्भवन्ति । नहि स कथञ्चिदमृतोऽभयो भवन्नपि संयद्वामो वामनीर्भामनीरिति च सम्भवति । अवस्थाभेदेऽपि च तदैश्वर्य्यस्य सावग्रहत्वाभ्युपगमान्न शक्यते संयद्वामत्वादिगुणसम्भवः कर्हिचिदुपपादयितुम् । परमात्मनि च तत्सम्भवो बहूपपादितोऽस्माभिरधस्तात् । तस्मात् सत्वात्राक्ष्यभ्यन्तरः पुरुषो न जीवात्मेति निःसंशयम् ॥ १७ ॥

**इदानीं** समानार्थकं श्रुत्यन्तरं निर्णिनीषुरन्तर्याम्यधिकरणमारभते—

**"अन्तर्य्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्" ॥१८॥**

ब्रह्मेत्यधिक्रियते । **अधिदैवादिषु**=अधिदैवशब्देन पृथिव्यबग्न्य-

न्तरिक्षवाय्वादित्यदिक्चन्द्रतारकाकाशतमस्तेजांसि गृह्यन्ते, दिव्यगुणानधिकृत्याश्रित्य वर्तमानत्वात्, दिव्यगुणा दैवा इति क्तम्, देवानाममीति तद्व्युत्पत्तेः, देवत्वं च पृथिव्यादीनामाम्नातं भगवति वेदे **"अग्निर्देवता वातो देवता"** (यजु० १४। इत्यादिषु, भूतप्राणवागादयश्चादिपदार्थाः, तेष्वधिदैवादिषु पृथिव्य **न्तर्य्यामी**=बृहदारण्यकेऽन्तर्य्यामिब्राह्मणे श्रुतोऽन्तर्य्यामी परब्र मात्मा प्रत्येतव्यः, कुतः ? **तद्धर्मव्यपदेशात्**=तदाऽधिक्रियमा परामृशति, तद्धर्मस्य यमयितृत्वादेरभिधानादित्यर्थः ।

बृहदारण्यके ह्यन्तर्य्यामिब्राह्मणे **"य इमं च लोकं परं च सर्वाणि च भूतान्यन्तरो यमयति"** (बृ० ३। इत्युपक्रम्य श्रूयते **"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो थिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो त्येष त आत्माऽन्तर्य्याम्यमृतः"** (बृ० ३।७।१) **"पृथिव्याः"** इति पञ्चमी विभक्तिः **"योऽन्तरिक्षे तिष्ठ क्षादन्तरः"** इत्यादिष्वग्रिमपर्य्यायेषु सर्वत्र तद्दर्शनात्, अन्त भिन्न इति यावत् । तत्र संशयः किमिह प्रधानशब्दवाच्या प्रकृतिरन्तर्य्यामीति निर्दिश्यते, किं वा जीवात्मा, यद्वा परब्र त्मेति । कुतः संशयः ? यमयितृत्वस्याशरीरिणि शरीरिणि दर्शनात् । दृश्यते खलु जीवात्मा शरीरमिन्द्रियं मनश्चाशरीर च्छति, भृत्यं पुत्रं भार्यां च सशरीर इति । प्रकृतिः पर शरीरः । जीवात्मा च सशरीरोऽशरीरश्च । तस्माद् युक्तः तत्र प्रकृतिर्जीवात्मा वाऽन्तर्य्यामीति पूर्वः पक्षः, परब्रह्म परमात्म सिद्धान्तः । **किं** तावत् प्राप्तम् ? प्रकृतिरिति वदामः । कारण कारणतन्त्राः खलु सर्वे विकाराः सर्वदा सर्वत्रात्मानं लभन्ते, श्चार्थक्रियां कुर्वते । येषां चात्मलाभार्थक्रियाकारित्वे यत्तन्त्रे, ते यम्यत्वं तस्य तन्नियमयितृत्वं च निर्बाधम् । सर्वविकारकारणं च प्रकृतिः । अतः सैवाधिदैवादिष्वन्तर्य्यामीति युक्तं विज्ञायते ।

  

रविन्दे योगरूढो वर्तते तथाऽक्षरशब्दोऽप्योङ्कारे योगरूढो ; ततश्चास्य "**यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण** ५ । ५) "**ओमित्येतदक्षरम्**" (मां० १) "**ओमि**... रम्" (छां० १ । १ । १) "**एतदक्षरमेतां च**" (... ७८) "**ओमित्येकाक्षरं ब्रह्म**" (गी० ९ । १३) इ... स्मृतिभ्यो वर्णविशेषत्वाद् रूढ्या, अश्नुते व्याप्नोति वाचकि... चोपस्थितिः सम्भवति यथा पङ्कजस्य पङ्कजशब्दात् । सर्वेषां व... सिश्च छान्दोग्योपनिषदि स्पष्टमाम्नायते "**तद् यथा शङ्कुना** ... **पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वाक्** स... (छां० २ । २३ । ४) इति । **शङ्कुना**=पर्णनालेन, पर्णा... वयवाः, **सन्तृण्णानि**=विद्धानि । न चोपस्थितौ सत्यां तद्... यो न युज्यते । अन्यथा जीवात्मपरमात्मगोचरोऽपि न युज्ये... त्वात् । तत्र संशये चात्रापि स युक्त इति सम्यगुत्पश्यामो ... विरहादिति । **नैतद्वक्तव्यम्** । उक्तोत्तरत्वात् । उक्तमसो... हि वर्णाः खलु सविकारस्याकाशस्य प्रकृतेराश्रयत्वानुपपत्त्या ... मर्हन्ति तथोङ्कारोऽपि न सन्देहमापद्यते । अविशेषात् । अथ... यथा हि "**पुरुष एवेदं सर्वम्**" (ऋ० ८ ।४। १७ । २) ... **एवेदं विश्वम्**" (मुं० २ । १।१०) "**ब्रह्मैवेदं विश्व**... २।२।११) "**सर्वं खल्विदं ब्रह्म**" (छां० ३ । १४ ।१) ... श्रुतिवचोभिः श्रूयमाणं सर्वत्वं ब्रह्मणस्तावत् सर्वाधारत्वात् ... तथोङ्कारस्यापि "**ओङ्कार एवेदं सर्वम्**" (छां० २ । ... इत्यादिना श्रूयमाणं सर्वत्वं सर्वाधारत्वात् समाधातव्यम् । ... प्रकृतितत्कार्य्योभयत्वम् । तथा च तस्योच्यमानं सविका... प्रकृतेराधारत्वमुपपद्यते नास्ति तदनुपपत्तिरिति । नैतद... अर्थभेदाभ्युपगमात् । न खलु "**पुरुष एवेदं सर्वम्**" (... ४ । १७ । २) इत्यादाविव "**ओङ्कार एवेदं सर्व**... २ । २३ । २०) इत्यादावपि सर्वशब्दस्यार्थः कार्य्यसहिता...

पगम्यते, किन्तु वाङ्मात्रम् । प्रकृतत्वात् । अन्यथा हि प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयाताम् । सामानाधिकरण्यं च तद्व्याप्तिनिबन्धनं नाधाराधेयभावनिबन्धनम् । तथा च तदवस्था तत्र तदनुपपत्तिरिति नासौ संशयमर्हति । **तस्माद्** युक्तो जीवात्मपरमात्मनोरेव संशयः । **तत्र** जीवात्मेति पूर्वः पक्षः, परमात्मेति सिद्धान्तः । **किं** तावत् प्राप्तम् ? जीवात्मेति निगदामः । सर्वस्य प्रकृतिविकारस्य तदर्थत्वात् । परार्थं खलु प्रकृतिः सर्वात्मना विक्रियते न स्वार्थम् । किं कारणम् ? यत्कारणमचेतना सा । भोगापवर्गौ हि शास्त्रेऽर्थ इति परिभाष्यते । तौ च चेतनस्य सम्भवतो नाचेतनस्य । नहि चेतनाहीनः कश्चन भोगापवर्गार्थं परिस्पन्दमानः क्वचिदवलोक्यते । प्रकृतिश्चाचेतनेति कथं सा स्वार्थं परिस्पन्देत विश्वात्मना च विक्रियेत । **न च** परमेश्वरार्थमपि तद्विक्रिया घटते । तस्य नित्यतृप्तत्वेनाभिलाषाभावात् । नित्यतृप्तो हि जगतां पतिः परमेश्वरः । यत्रेदमाम्नायते **"अकामो धीरो अमृतः स्वयम्भू रसेन तृप्तो न कुतश्चनोनः"** ( अथ० १० । ४ । ८ ४४ ) इति । **रसेन**=स्वरूपभूतेनानन्देन **"रसो वै सः"** ( तै० २७ ) इति श्रुतेः । स न कर्हिचिद् भोगमभिलषते न वाऽपवर्गमर्थयते । यस्य खलु भोगापवर्गगोचरोऽभिलाषः कालत्रयेऽपि नोपावर्तते । यश्च लीलयाऽपि न तौ कर्हिचिदाकाङ्क्षते कथं तदर्थं प्रकृतिर्विक्रियेत । न च जीवात्मपरमात्मभ्यामन्यः कश्चन चेतनो विद्यते यदर्थं तद्विक्रिया कल्प्येत । पारिशेष्याज्जीवात्मार्थमेव सा विकारमनुभवतीति कल्पयितव्यम् । अन्यथा मा नाम तत्स्रष्टेर्नैरर्थक्यं प्रसांक्षीत् । **न** च जीवात्मनोऽपि परमात्मवद् भोगापवर्गगोचरोऽभिलाषो न वर्तत इति वक्तुमुत्सह्यते । तस्य सर्वानुभवसिद्धत्वेन प्रत्याख्यातुमशक्यत्वात् । यथा हि जीवात्मा खलु सांसारिकं शब्दादिविषयोपभोगमभिलषमाणःप्रत्यात्ममनुभूयते तथाऽपवर्गं कामयमानोऽप्युपलभ्यते । नच यदनुभवसिद्धं तत्केनचित्प्रत्याख्यातुं शक्यते । न चापि प्राणान् धारयते भोगापवर्गौ च न कामयत इति कदाचित् सम्भवति । यस्य च भोगापवर्गगोचरोऽभिलाषः

सततमनुवर्तते यथाशक्ति तदुचितं विहितमविहितं कर्म च । तदर्थं प्रकृतेरपि सृष्टिलक्षणा विक्रिया युज्यते । यथा यक्षस्तथा बलि न्यायात् । अत एव चोक्तं दर्शनान्तरे **"अनुपभोगेऽपि सृष्टिः प्रधानस्योष्ट्रकुङ्कुमवहनवत्"** ( सां० ६ । ४० ) भोग्यशक्तिर्हि प्रकृतिः । सा यदा सृष्टिनियोगं लभते तदा जीव भोगापवर्गौ प्रयोजनमुररीकृत्य यथाकर्म विविधमिदं विषयेन्द्रिय जगदारभते । जीवात्मा च भोक्तृशक्तिः । स तदारब्धेऽस्मिञ्जगति चिदिष्टविषयसंयोगात् सुखमुपलभते कदाचिदनिष्टविषयसंयोगाद् मुपभुङ्क्ते । सोऽयमस्य भोगः । यत्रेदं स्मर्य्यते **"चिदवसानो** ( सां० १ । १०४ ) इति । यदा चायं दिवानिशमिष्टानिष्टविष पभुञ्जानो नात्यन्तां शान्तिं विन्दते तदुपभोगाभ्यासं च रागा नेनेन्द्रियचाञ्चल्यहेतुत्वात् तदनुपायं निश्चिनुते तदा ततो नि श्रोत्रियं ब्रह्मनिष्ठं गुरुं चोपसम्पद्य यथोपदेशं यतमानः परमात्म पद्यते । अथ मुच्यते । सोऽयमस्यात्यन्ता शान्तिरपवर्गः । यत्रे **"यो योनिं योनिमधितिष्ठत्येको यस्मिन्निदं सं च सर्वम् । तमीशानं वरदं देवमीड्यं निचाय्येमां मत्यन्तमेति"** ( श्वे० ४ । ११ ) इति । स्मर्य्यते च **"त विमोक्षोऽपवर्गः"** ( न्या० १ । १ । २२ ) इति । शक्त्योश्च तयोर्यथा परस्परमविद्यापरिबृंहितो योग्यतालक्षणः वदभ्युपेयते तथाऽऽश्रयाश्रयिभावोऽप्यास्थातुं शक्यते । भोग्य रमन्तरेणावस्थानानुपपत्तेः । यथा खलु राजानमन्तरेण राज्य नावकल्पते तथा जीवात्मानमन्तरेण सविकारायाः प्रकृतेरप्यवस्था तूपपद्यते । यद्विना च यदवस्थानानुपपत्तिर्नूनं स तदाश्रय इति तस्माज्जीवात्मैव सविकारस्याकाशस्य प्रकृतेराश्रयत्वादत्राक्षरं परमेश्वर इति । एवं प्राप्त उच्यते—**अक्षरमम्बरान्तधृतेः** प्रकृतिर्जीवात्मनो भोगापवर्गौ प्रयोजनमुररीकृत्य विषयेन्द्रिया व्यादिविकारजातमारभते, तच्च तावदवतिष्ठते यावज्जीवात्मनः

मिदं न सम्पद्यते। न चैतावता तस्य कथञ्चिद् विकारावस्थाने हेतुत्वे कल्प्यमानेऽपि प्रकृत्यवस्थाने हेतुत्वं कल्पयितुं शक्यते। नहि यद्विकारावस्थाने हेतुस्तेन तत्प्रकृत्यवस्थानेऽपि हेतुना भवितव्यमित्यस्ति कश्चिन्नियमः। न च यदेकमवस्थापयति तेनापरमप्यवस्थाप्यत इति तर्कपथमारोहति। **न** च यस्य यदवस्थानहेतुत्वमनुपपन्नं तस्य तदाश्रयत्वं कर्हिचिद् घटते। स्पष्टं चेह पृथिव्यादिविकारजातमाश्रयन्त्याः प्रकृतेराश्रयस्तावत् पृच्छ्यते **"कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च"** (बृ० ३।८।७) इति। व्यक्तं च तदाश्रयोऽक्षरं प्रत्युच्यते **"एतद् वै तदक्षरं गार्गि! ब्राह्मणा अभिवदन्ति"** (बृ० ३। ८ । ६) इति। **"यस्मिन् भूमिरन्तरिक्षं द्यौर्यस्मिन्नध्याहिता"** (अथर्व० १०।४। ७।१२) **"यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः"** (मुं० २।२।५) इत्यादिश्रुतिभ्यः सविकारायाः प्रकृतेराश्रयत्वं च परब्रह्मणः परमेश्वरस्यैव धर्मोऽवगम्यते। तत्सामान्यादिहापि तेनैव तदाश्रयेण भवितव्यमिति विज्ञायते। **तस्मादत्र** सविकारस्याकाशस्य प्रकृतेराश्रयत्वेन श्रुतमक्षरं परब्रह्म परमेश्वर एव भवितुमर्हति न जीवात्मा॥ १०॥

**स्यादेतत्**—तदा हि जीवात्मा खलु विकारावस्थाने हेतुर्भवन् प्रकृत्यवस्थाने हेतुर्न भवेद् यदि विकारेभ्यः प्रकृतिर्विशिष्येत। न च सा तेभ्यो विशिष्यते। सत्कार्य्यवादात्। सत्कार्य्यवादे च प्रकृतिविकारयोरभेदोऽभ्युपगम्यते न भेदः। नहि भेदाभ्युपगमे **"प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्"** (यो० २।१८) इति प्रकृतिलक्षणं कथञ्चित् सङ्गच्छते। **नन्वस्तु** तर्ह्यसत्कार्य्यवादः। **न**। व्युदस्तत्वात्। अतो विकारावस्थाने यो हेतुः स एव तत्प्रकृत्यवस्थानेऽपि हेतुरिति वक्तव्यम्। **तथा च** जीवात्मैवाक्षरमम्बरान्तधृतेर्न परब्रह्म परमेश्वर इति। **अस्योत्तरं** पठति—

**"सा च प्रशासनात्"॥ ११॥**

पूर्वत्र यो हेतुरुपन्यस्तस्तत्रैष हेतुरिति चार्थः। अधिक्रियमाणं ब्रह्म

षष्ठ्या विपरिणम्य सम्बध्यते । **सा**=अम्बरान्तधृतिः परमेश्वरस्य धर्मोऽवगन्तव्यः, कुतः? **प्रशासनात्**=प्रशासनपूर्विकेत्यर्थः ।

न खल्वक्षरस्य परमेश्वरत्वे केवलाऽम्बरान्तधृतिर्हेतुः क्रियते, जीवात्मनि कथञ्चिद् व्यभिचरन्ती तस्य परमेश्वरत्वं न प्र... किन्तु प्रशासनपूर्विका सा हेतुर्विधीयते "**एतस्य वा अ... प्रशासने गार्गि! सूर्य्याचन्द्रमसौ विधृतौ ति... एतस्य वा अक्षरस्य प्रशासने गार्गि! द्यावापृथिव्यौ धृते तिष्ठतः**" (बृ० ३ । ८ । ९) इत्यादिवाक्यशेषात् । ... च प्रकृष्टं शासनं नियोगो नियमनमाज्ञा, तस्य प्रकृष्टत्वमनिवार्य... हतत्वमिति यावत् । न च तत्पूर्विकाऽम्बरान्तधृतिर्जीवात्मनो धर्म... मर्हति । नहि स कतिपयपदार्थानां प्रशास्ता भवन्नपि पृथिव्या... पर्य्यन्तानां सर्वेषां पदार्थानां प्रशास्ता विद्यते, येन तत्पूर्विका... परिकल्प्येत । परब्रह्मणःपरमेश्वरस्य सर्वपदार्थप्रशास्तृत्वं च श्रुति... भ्यामध्यवसीयते "**सर्वस्येशानः सर्वस्याधिपतिः सर्व... शास्ति यदिदं किञ्च**" (बृ० ५ । ६ । १) "**प्रशासित... वैषामणीयांसमणोरपि । रुक्माभं स्वप्नधीगम्यं ... पुरुषं परम्**" (मनु० १२ । १२२) इति । यथा चै... जगतां पतिरीश्वरः सर्वपदार्थानां प्रशास्ता श्रुतिस्मृतिभ्याम... तथा प्रशासनपूर्वको विधर्ताऽपि प्रमीयते "**सप्तार्धगर्भा ... रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि**" (ऋ० ... २१ । ३६) "**कविं पुराणमनुशासितारमणोरणीयां... स्मरेद् यः । सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं... परस्तात्**" (गी० ८ । ९) इति । **भुवनस्य**=... **रेतः**=बीजभूताः, **अर्धगर्भाः**=अर्धं समृद्धं लोकत्रयं गर्भे ... तीनां ताः **सप्त**=महदाद्याः सप्त प्रकृतयो **विष्णोः**=... परब्रह्मणः **परमेश्वरस्य प्रदिशा**=अप्रतिहताज्ञया **विधर्मणि**...

त्यः स्वस्वव्यापारे **तिष्ठन्ति**=वर्तन्त इति मन्त्रार्थः । तत्सामान्यादत्रापि परब्रह्मणा परमेश्वरेणैव पृथिव्यादिसर्वपदार्थविधर्त्रा भवितव्यम् । अन्यथा मिथो विरोधापत्तेः । न चाविरोधे सम्भवति विरोधाभ्युपायो ज्यायान् । **तस्मादिह** परब्रह्म परमेश्वर एवाक्षरमम्बरान्तधृतेर्न जीवात्मा ॥ ११ ॥

अक्षरस्य परमेश्वरत्वे हेत्वन्तरं समुच्चिनोति—

**"अन्यभावव्यावृत्तेश्च" ॥ १२ ॥**

ब्रह्मेत्यधिक्रियते । अक्षरमिति पूर्वसूत्रादनुवर्तते । अक्षरस्य परमेश्वरत्वे हेत्वन्तरमेतदिति चकारेणोच्यते । **अन्यभावव्यावृत्तेः**=परमेश्वरादन्यस्य भिन्नस्य पृथिव्यादिप्रकृतिपर्य्यन्तस्याचेतनस्य जीवात्मनश्चेतनस्य च भावस्य पदार्थस्य व्यावृत्तेर्व्यावर्तनादक्षरं परब्रह्म परमेश्वरो गम्यत इत्यर्थः ।

ये खलु परमेश्वरादन्ये चेतनाचेतनात्मानः पदार्था विद्यन्ते ते सर्वेऽप्यक्षरस्य विशेषणविशेषोपादानेन व्यावर्त्यन्ते **"एतद् वै तदक्षरं गार्गि! ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन"** (बृ० ३ । ८ । ८) इति । तत्रास्थूलमित्यादिना **पृथिवी,** अलोहितमित्यादिना **तेजः,** अस्नेहमित्यादिना **जलम्,** अवाय्वनाकाशमित्यादिना **वायुः, आकाशं** च, अचक्षुष्कमित्यादिना **जीवात्मा,** अनन्तरमबाह्यमित्यादिना च **प्रकृतिर्व्यावर्त्यते** । चेदिह जीवात्मनोऽक्षरशब्देन ग्रहणमभिप्रेयेत तदा न जात्वसौ व्यावर्त्येत । नह्यक्षरस्य जीवात्मत्वे तद्व्यावृत्तिर्युज्यते । तथा **"तद्वा एतदक्षरं गार्गि! अदृष्टं द्रष्ट्रश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ"** (बृ० ३ । ८ । ११) इत्यक्षरस्यादृष्टत्वादिपूर्वकद्रष्टृत्वादिकं प्रतिपादयन्ती श्रुतिस्तस्य स्पष्टं जीवात्मतां व्यावर्तयति । नहि जीवात्मा यदा रूपं पश्यति तदा न

*

दृश्यते, यदा शब्दं शृणोति तदा न श्रूयते, यदा मननीयं म
न मन्यते, यदा विज्ञातव्यं विजानाति तदा च न विज्ञायते
चास्ति ततो विपरीतम् । **अथवा** छान्दसत्वात् करणे
प्रत्ययः । दर्शनसाधनं चक्षुर्दृष्टं, श्रवणसाधनं श्रोत्रं श्रुतं, म
मनो मतं, विज्ञानसाधनं बुद्धिर्विज्ञातम् । तद् यस्य नास्ति
शृणोति मनुते विजानाति च गार्गि ! तद्वा एतदक्षरमित्यर्थः
जीवात्मव्यावृत्तिः सुव्यक्ता । नहि स चक्षुरभावे पश्यति
शृणोति मनोऽभावे मनुते, बुद्ध्यभावे च जानीते । न चायं
पश्यन् श्रोत्रेण शृण्वन् मनसा मन्वानो बुद्ध्या जानानोऽक्षरं
र्हति । परमात्मा चास्ति ततो विपरीतश्चक्षुरभावे पश्यति
शृणोति मनोऽभावे मनुते बुद्ध्यभावे च जानीते । यत्रे
**"अतो विश्वान्यद्भुता चिकित्वाँ अभिपश्यति**
**या च कर्त्वा"** (ऋ० १।२।१८।११) **"अच**
**श्रोत्रमवागमनः"** (बृ० ३।८।८) **"सर्वेन्द्रियगु**
**सर्वेन्द्रियविवर्जितम्"** (श्वे० ३।१७) **"अपाणिपा**
**वनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः"** (
१९) इति । तस्मात् स एवात्राक्षरमिति विज्ञायते । **"नान्**
**स्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति**
**नान्यदतोऽस्ति विज्ञातृ"** (बृ० ३।९।११)
रादीनां प्रतिषेधस्तु तत्तुल्यद्रष्टृन्तरादिप्रतिषेधाभिप्रायो
यथा ह्यस्मिन् **दहरादूने** खलु "ज्योतिस्स्वरूपतोऽन्यः
विद्यते" इत्युक्ते तत्र पुरुषमात्रप्रतिषेधो नाभिप्रेयते किन्तु
रूपतुल्यपुरुषान्तरप्रतिषेधः । पुरुषान्तराणां प्रमाणसिद्धत्वेन
शक्यत्वात् । तथाऽत्रापि द्रष्टृन्तरादीनां जीवात्मनां प्रमाणसि
द्रष्टृन्तरादिमात्रं प्रतिषिध्यते किन्तु प्रकृताक्षरतुल्यं द्रष्टृन्त
साधु प्रतिपद्यामहे । जीवात्मा हि चक्षुरादिभिः करणैर्द्रष्टा
बोद्धा बोभूयते नाक्षरं परब्रह्म परमेश्वरः । **यद्वा** द्रष्टुः श्रोतुः

जीवात्मनोऽन्यद् यथाऽक्षरं द्रष्टृ श्रोतृ मन्तृ विज्ञातृ विद्यते तथाऽक्षरतोऽप्यन्यत् तत्समं तदधिकं वा किञ्चिद् द्रष्टृ श्रोतृ मन्तृ विज्ञातृ च स्यादिति शङ्कां व्युदस्यन् **"नान्यदतोऽस्ति द्रष्टृ"** इत्यादिकमुपदिश्यते। परब्रह्मणा परमेश्वरेणाक्षरेण तुल्यं ततोऽधिकं वा नान्यत् किञ्चिदभ्युपगम्यते। **"नकिरिन्द्र! त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन्!। नकिरेवा यथा त्वम्"** (ऋ० ३।६।१९।१) **"न तत्समश्चाभ्यधिकश्च दृश्यते"** (श्वे० ६।८) इत्यादिना प्रतिषिद्धत्वात्। अतो युक्तो द्रष्ट्रन्तरादिप्रतिषेधः। **"यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि, अन्तवदेवास्य तद् भवति। यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति स कृपणः। अथ य एतदक्षरं गार्गि! विदित्वाऽस्माल्लोकात् प्रैति स ब्राह्मणः"** (बृ० ३।८।१०) इति चाक्षरस्यावेदनेन यथाशास्त्रमनुष्ठितानामपि वैदिककर्मणां क्षयिष्णुत्वम्, अवेदितुः पुनः पुनर्जन्ममरणप्रबन्धलक्षणसंसाराम्बुधिपतनरूपं कृपणत्वं, वेदितुरुक्तलक्षणसंसाराम्बुधिमुत्तीर्य्य ब्रह्मप्राप्तिरूपं ब्राह्मणत्वं चोपदिशन् प्रत्यक्षमस्य जीवात्मतां व्यावर्तयति, परमात्मतां च व्यवस्थापयति। प्रसिद्धं खल्वेतत्। परब्रह्म परमात्मानमविदित्वैव जीवात्मा जन्ममरणप्रबन्धलक्षणसंसाराम्बुधौ पनीपत्य कृपणः=दीन आस्ते, विदित्वा चोक्तलक्षणं संसाराम्बुधिमुत्तीर्णः परब्रह्म परमात्मानं सुखमध्यास्ते। यत्रेदं श्रूयते **"इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः"** (के० २।१३) इति। न च प्रसिद्धेऽर्थे युक्तः संशयः। **तत्प्रयोगोपलम्भाच्च।** परब्रह्मणि परमेश्वरे खल्वक्षरशब्दप्रयोगोऽप्युपलभ्यते **"ऋचो अक्षरे परमे व्योमन्"** (ऋ० २।३।२१।३९) **"परमेवाक्षरं प्रतिपद्यते"** (प्र० ४।१०) **"अथ परा यया तदक्षरमधिगम्यते"** (मुं० १।१।५) **"येनाक्षरं पुरुषं वेद सत्यम्"** (मुं० १।२।१३) **"यदक्षरं वेदविदो वदन्ति"**

(गी० ८ । ११) **"त्वमक्षरं परमं वेदितव्यम्"** (गी० ... १८) इति । न चाक्षरस्य जीवात्मत्वे तत्र तत्प्रयोगोपलम्भः ... पपद्यते । नन्ु **"तथाऽक्षराद् विविधाः सोम्य! भावाः"** ... २ । १ । १) **"अक्षरात्परतः परः"** (मुं० २ । १ । २) ... प्रकृतौ **"कूटस्थोऽक्षर उच्यते"** (गी० १५ । १६) इति ... त्मनि चापि तत्प्रयोग उपलभ्यत इति चेत् ? । **अत्रोच्यते**—... भ्यं प्रयोगः, तथाप्यत्र तदुपादानकारणं न किञ्चिदीक्षामहे, येन ... तरं कञ्चनोपाददीमहि । **तस्माद्** ब्रह्मैवात्राक्षरमिति सिद्धम् ॥ ...

अक्षरं ब्रह्मेत्यभिहितम् । **सम्प्रति** तस्य पुरुषत्वमभिधातु... मधिकरणमवतारयति—

**"ईक्षतिकर्मव्यपदेशात् सः" ॥ १३ ॥**

ब्रह्मेत्यधिक्रियते । सः=प्रश्नोपनिषदि श्रुतः स पुरुषः पर... श्वरो वेदितव्यः, कुतः ? **ईक्षतिकर्मव्यपदेशात्**=ईक्षणरूप... नादित्यर्थः ।

प्रश्नोपनिषदि हि षष्ठे प्रश्ने **"षोडशकलं भारद्वाज! ... वेत्थ"** (प्र० ६ । १) इति प्रकृत्य श्रूयते **"इहैवान्तः ... सोम्य! स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभ...** (प्र० ६ । २) इति । तत्र संशयः किमिह श्रुतः स पुरुषो ... स्यादाहोस्वित् परब्रह्म परमेश्वर इति । कुतः संशयः ? साधारण... गात् । जीवात्मपरमात्मसाधारणः खलु पुरुषशब्दः । स यथा ... त्मनि प्रयुज्यमान ईक्ष्यते **"सहस्रशीर्षा पुरुषः"** (ऋ० ... १७ । १) **"वेदाहमेतं पुरुषं महान्तम्"** (यजु० ३१ ... **"यत्रामृतः स पुरुषो ह्यव्ययात्मा"** (मुं० १ । २ ... **"दिव्यो ह्यमूर्तः पुरुषः"** (मुं० २ । १ । २) इति, तथा ... त्मनि प्रयुज्यमानोऽपि निरीक्ष्यते **"एतद् वृक्षं पुरुष... धसः"** (कठ० ... ८) **"तेन नर्दैष पुरुषो न ...**

पश्यति" (प्र० ४। २) **"एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः"** (प्र० ४। ९) **"अथ खलु क्रतुमयः पुरुषः"** (छां० ३। १४। १) इति। न चैवं साधारणशब्दप्रयोगे निरीक्ष्यमाणे जीवात्मनो वा परब्रह्मणः परमेश्वरस्य वाऽत्र ग्रहणमिति निश्चेतुं शक्यते। शरीरान्तराख्यानाच्च। स पुरुषः खलु शरीरस्यान्तराख्यायते **"इहैवान्तः शरीरे स पुरुषः"** (प्र० ६। २) इति। शरीरान्तरवस्थानं च यथा परब्रह्मणः परमेश्वरस्य वर्तते तथा जीवात्मनोऽपि वरीवृत्यते। तस्माद् युक्तः संशयः। **तत्र** जीवात्मेति पूर्वः पक्षः, परब्रह्म परमेश्वर इति सिद्धान्तः। **किं** तावत् प्राप्तम्? जीवात्मेति वच्मः। तल्लिङ्गोपलब्धेः। **अस्त्युत्क्रान्तिः** खलु जीवात्मनो लिङ्गम्। स हि कर्मार्जिते शरीरे यावत् कर्म न भुज्यते तावत् तत्र प्रतितिष्ठति, भुज्यमाने च तस्मिन् पुनर्यथाकर्म शरीरान्तरग्रहणाय पूर्वस्मात् तस्मादुत्क्रामति। यत्रेदं श्रूयते **"स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति"** (बृ० ४। ३। ८) **"तस्य हैतस्य हृदयस्याग्रं प्रद्योतते, तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः"** (बृ० ४। ४। २) **"स यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति** (कौ० ३। ४) इति। **"कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि"** (प्र० ६। ३) इति च। न चात्र श्रूयमाणस्य पुरुषस्य परमात्मत्वे सा कथञ्चिदुपपद्यते। परमात्मनो व्यापकत्वेन तदसम्भवात्। अपसृत्यपरपर्य्याया ह्युत्क्रान्तिः। सा च परिच्छिन्नस्य जीवात्मनः सम्भवति नापरिच्छिन्नस्य जगत्पितुः परमात्मनः। **तस्मा**ज्जीवात्मैवात्र श्रुतः स पुरुषो न परब्रह्म परमेश्वर इति। एवं प्राप्त उच्यते—**स ईक्षतिकर्मव्यपदेशात्**। इह ह्युत्तरत्र वाक्यशेषे तच्छब्देन प्रकृतं पुरुषं परामृश्य तद्धर्म ईक्षतिरूपं कर्म तावद् व्यपदिश्यते **"स ईक्षाञ्चक्रे"** (प्र० ६। ३) इति। वक्ष्यमाणप्राणश्रद्धाऽऽकाशवायुतेजोऽप्पृथिव्यादिषोडशकलोत्पत्त्यनुकूलसङ्कल्पगर्भं प-

र्य्यालोचनं चेक्षतिः, यं किलौपनिषदास्तपोनाम्ना व्याचक्षते "स तप्यत" ( प्र० १ । ४ ) "**तपसा चीयते ब्रह्म**" ( १ । ८ ) इति । स च पुरुषस्य तस्य परमात्मत्वे सङ्गच्छते त्मत्वे । यः खलु कलानामासां स्रष्टा भवेत् स एव तत्स्रष्टृत्व मर्हति । न चाल्पज्ञोऽल्पशक्तिर्जीवात्मा तत्स्रष्टा सम्भवति । प्राप्तमैश्वर्य्यमपि कदाचिज्जगद्व्यापारविषयं कल्पते, येन तत्स्रष्टा परमात्मा चास्ति तत्स्रष्टा "**एतस्माज्जायते प्राणो मनः याणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य** ( मुं० २ । १ । ३ ) इत्यादिश्रुतिभ्यः । तस्य स्रष्टृत्वे चेक्षतिः तद्धर्म उपपद्यते । स्रष्टुः स्रष्टव्यगोचरेक्षणक्रियाया औचित्यात् न्तरेऽपि चेक्षतिस्तद्धर्म एवाम्नात उपलभ्यते "**स ईक्षत सृजै**" ( ऐ० १ । १ ) "**तदैक्षत बहुस्यां प्रजायेय**" ६ । २ । १ ) इति । तत्सामान्यादिहापि तद्धर्मेणैव तेन भवि युक्तं विज्ञायते । अन्यथा मिथोविरोधप्रसङ्गात् । न च स इष्यते किं पुनः श्रुतिषु । **प्रलयाभिधानाच्च** । यथा हि पुरुषात्त पूर्विका खलु प्राणादीनामुत्पत्तिर्गीयते तथा तदाश्रयस्तत्प्रलयोऽपि पूर्वकोऽभिधीयते "**यथा नद्यः स्यन्दमानाः समुद्राय मुद्रं प्राप्यास्तं गच्छन्ति, भिद्येते तासां नामरूपे, इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोडश पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति, भिद्येते नामरूपे, पुरुष इत्येवं प्रोच्यते**" ( प्र० ६ । ५ ) इति भावं गतानां प्राणादीनां समुद्रे सरितामिव पुरुषेऽविभा प्रलयः । स च समुद्रस्थानीयेऽधिष्ठानकारणे महति परब्रह्मणि न्युपपद्यते न तद्वोक्तरि परिच्छिन्ने जीवात्मनि । श्रुत्यन्तरा न्तरेऽपि सर्वकलाप्रलयस्तावत् परमात्माश्रय एव श्रूयते न "**गताः कलाः पञ्चदश प्रतिष्ठाः, देवाश्च सर्वे प्रतिदे कर्माणि विज्ञानमयश्च आत्मा, परेऽव्यये सर्वे**

वन्ति" (मुं० ३ । २ । ७) इति । अविभागेनावस्थानमेकीभावः । न चैकत्र श्रुतमन्यत्र परित्यज्यते । श्रुतिसंयोगसामान्यात् । अतः परमात्मैव स पुरुषो न जीवात्मेत्यवसीयते । **मान्त्रवर्णिकलिङ्गाच्च** । मन्त्रवर्णाद्धि षोड़शकलासम्बन्धः खलु परमात्मन एवाधिगम्यते न जीवात्मनः । नहि मन्त्रवर्णेषु षोड़शकलानिमित्तं षोड़शीति नाम जीवात्मनः क्वचिदुपलभ्यते । परमात्मनश्चास्ति तदुपलब्धिरपरोक्षा **"यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया संरराणस्त्रीणि ज्योतींषि सचते स षोड़शी"** (यजु० ८ । ३६) इति । तदिदं तस्य पुरुषस्य परमात्मत्वे मान्त्रवर्णिकं लिङ्गम् । यच्चोक्तं जीवात्मलिङ्गोपलब्धेर्जीवात्मैव स पुरुषो न परमात्मेति । तन्न चारु । वाक्यार्थाज्ञानपूर्वकत्वात् । न खलु **"कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि"** (प्र० ६ । ३) इत्यत्र षोड़शकलस्य पुरुषस्य शरीरादुत्क्रान्तिरुपन्यस्यते **किन्तु** जीवात्मनः । तदुत्क्रान्तिनिमित्तं व्यपदेशमात्रं चान्तरात्मनि षोड़शकले पुरुषे । कस्मिन्नु जीवात्मनि पुरुषे खलु शरीरादुत्क्रान्तेऽहमुत्क्रान्तो भविष्यामि=तन्निमित्तमुत्क्रान्तिव्यपदेशं भक्ष्यामि, कस्मिन् वा तत्र प्रतिष्ठितेऽहमपि प्रतिष्ठास्यामि=प्रतिष्ठाव्यपदेशमेष्यामीति वाक्यार्थात् । **अनेन** हि यं जीवात्मानं पुरुषं खलु निमित्तीकृत्य स पुरुषः प्राणादिकलोत्पत्त्यर्थमीक्षणं विधत्ते तस्मिन्नेवोत्क्रान्तिप्रतिष्ठे नेक्षणकर्तरि पुरुषे, स हि तत्र तद्व्यपदेशमात्रमाश्रयते न परमार्थतस्तदाश्रयतां भजत इति विस्पष्टम् । **तस्मात्** परब्रह्म परमात्मैव स पुरुषो न जीवात्मेति निश्चयः ॥ १३ ॥

परब्रह्म परमात्मा पुरुष इति निरूपितम् । **सम्प्रति** तस्य पुरुषत्वसामान्यात्प्रसक्तं परिच्छिन्नत्वं निराचिकीर्षुरन्यमधिकरणमारभते—

**"दहर उत्तरेभ्यः" ॥ १४ ॥**

ब्रह्मेत्यधिक्रियते । **दहरः**=छान्दोग्योपनिषदि श्रुतो दहराकाशः परब्रह्म परमेश्वरो वेदितव्यः, कुतः ? **उत्तरेभ्यः**=उत्तरवाक्यगतेभ्यो हेतुभ्य इत्यर्थः ।

छान्दोग्योपनिषदि ह्यष्टमप्रपाठके श्रूयते "**अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तः, तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्**" (छां० ८ । १ । १ ) इति । **तत्र** संशयः किमिह **ब्रह्मपुरे दहरे**=परिच्छिन्ने **पुण्डरीके**=हृदयपुण्डरीके **वेश्मनि**=सद्मनि दहराकाशो जीवात्मा स्यादाहोस्वित् परब्रह्म परमेश्वर इति । कुतः संशयः? दहराकाशशब्दाभ्यामिति ब्रूमः । परिच्छिन्नवचनो हि दहरशब्दः परिच्छिन्नश्च जीवात्मा भवति न परमेश्वरः । आकाशशब्दश्च परमेश्वरे प्रयुज्यते न जीवात्मनि । योगेन तत्र तत्प्रयोगे दहरशब्दोऽपि पुण्डरीकोपाधिना परब्रह्मणि परमेश्वरे प्रयोक्तुं शक्यते । तस्मात् संशयः । **अथोच्येत**—भूताकाशे कुतो न संशय्यते तत्रापि तु दहरत्वोपपत्तेराकाशशब्दप्रयुक्तेश्चेति । **नैतद् वक्तव्यम्** । उपमानोपमेयभावेन भेदप्रतिपत्त्या प्रतिरोधाद् संशयानुत्पत्तेः । आन्तरः हि दहराकाश इह बाह्याकाशेनोपमीयते "**यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः**" (छां० ८ । १ । ३) इति । भेदतन्त्रश्चायमुपमानोपमेयभावो न जात्वभेदे कथञ्चिदवकल्पत इत्युभयोर्भेदः प्रतिपद्यते । न च तत्प्रतिपत्तौ सत्यां "भूताकाशो वा दहराकाशः स्यात्" इति संशय उत्पत्तुमर्हति । तस्य तत्प्रतिपत्त्या प्रतिरोधात् । **तत्र** जीवात्मेति पूर्वः पक्षः, परब्रह्म परमेश्वर इति सिद्धान्तः । किं तावत् प्राप्तम्? जीवात्मेति निगदामः । **दहरत्वात्** । दहरत्वं हि परिच्छिन्नत्वम् । तच्चाऽणुत्वाज्जीवात्मनि मुख्यमुपपद्यते न परब्रह्मणि परममहत्त्वात् । मुख्यामुख्ययोश्चासति बाधके मुख्यस्योपादानमुचितं नामुख्यस्य । नहि सिंहशब्दप्रतिपाद्यं प्रतिपित्सुः प्रथमं देवदत्तं कदाचित् प्रतिपद्यते न केसरिणम् । आकाशशब्दश्चाकाशते प्रकाशते इति योगेन जीवात्मन्यपि प्रयोक्तुं शक्यते । **प्रकाशात्मकत्वात्** । स हि प्रकाशात्मा खलु परब्रह्म परमेश्वर आ पृथिव्या आ च दिवः सर्वमिदं जगदवभासयति, "**तमेव भान्तमनुभाति सर्वं**

**भासा सर्वमिदं विभाति"** ( मुं० २ । २ । १० ) इत्यादिश्रुतेः, तथा जीवात्मा पुरुषोऽपि प्रकाशात्मा पादतलादारभ्य मूर्धपर्य्यन्तं सर्वमिदं शरीरं सम्यक् प्रकाशयति । यत्रेदं श्रूयते **"योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः"** ( बृ० ४ । ३ । ७ ) इति । यश्च स्वयं प्रकाशमानः परं प्रकाशयति तत्र योगेनाकाशशब्दप्रयोगोऽपि युज्यतेतरां नास्ति काचिदनुपपत्तिः । **ब्रह्मपुरव्यपदेशाच्च** । जीवात्मनो हि शरीरमिदं पुरं सद् ब्रह्मपुरमिति व्यपदिश्यते **"यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकम्"** ( छां० ८ । १ । १ ) इति । व्यपदेशश्च सर्वोऽसाधारण्येन प्रवर्तमानो दृश्यते न तु साधारण्येन । नहि क्षितिजलपवनबीजादिसमवधानजन्माऽप्यङ्कुरः क्वचित् कदा[illegible]श्चित्या-दिभिर्व्यपदिश्यमानो निरीक्ष्यते । तेषां कार्य्यान्तरेष्वपि हेतुत्वेन साधारण्यात् । शालिबीजेन व्यपदेशस्तु प्रत्यक्षः शाल्यङ्कुर इति । तस्य चास्ति तत्रासाधारण्यम् । तदिदं शरीरमपि ब्रह्मणा व्यपदेष्टव्यम् । जीवात्मा परमात्मा चोभयं ब्रह्मेति समगरिष्महि पुरस्तात् । तत्र न तावत् परमात्मना व्यपदेष्टुं शक्यते । तस्य सर्वविकारकारणत्वेनातिसाधारण्यात् । जीवात्मनश्चास्ति तत्रासाधारण्यम् । स्वधर्माधर्माभ्यामुपार्जितत्वात् । जीवात्मना हि स्वधर्माधर्माभ्यां शरीरमिदमुपार्ज्यते **"पुण्येन पुण्यं लोकं नयति पापेन पापम्, उभाभ्यां मनुष्यलोकम्"** ( प्र० ३ । ७ ) इत्यादिश्रुतेः । अतो युक्तस्तेन तस्य तद्व्यपदेश इति सम्यगुत्प्रेक्षामहे । न च यस्य येन व्यपदेशस्तस्य हृदयपुण्डरीके वेश्मनि वर्तमानो दहराकाशस्ततोऽन्यो भवितुमर्हति । तत्सहचरितन्यायातिक्रमप्रसङ्गात् । अस्ति खलु लिङ्गलिङ्गिनोरिव व्यपदेश्यव्यपदेशकयोरपि परस्परं सहचारनियमः । कथमन्यथा तेनेदं व्यपदिश्येत । नहि प्रजासहचाराभावे कश्चित् प्रजापो व्यपदिश्यते । व्यपदेश्यं चात्र शरीरं व्यपदेशकश्च जीवात्मा ब्रह्म । चेत्तद्व्यपदेश्ये शरीरेऽस्मिन् हृदयपुण्डरीके वेश्मनि वर्तमानो दहराकाशो जीवात्मनोऽन्यः परिगृह्येत तदा **"तत्सहचरितातत्सहचरितयोस्तत्सहचरितस्यैव ग्रहणम्"** इति न्यायस्यातिक्रमः प्रसज्येत ।

न च स प्रशस्यते । **सप्तमीश्रवणाच्च** । इह हि ब्रह्मपुर इति श्रूयते । सप्तम्याश्चाधारोऽर्थः । तेनानेनाधेयेन सम्बन्धव्यम् । न च ब्रह्मणः परमेश्वरस्याधेयत्वं युज्यते । तस्य व्यापकतया समहि- त्वेनानाधेयत्वात् । जीवात्मा चाणुपरिमाण इति सम्भवत्याधे- **स्वामिभावसम्बन्धाच्च** । अस्ति खलु स्वं ब्रह्मपुरं शरीरम्- म्यत्वात् । न चास्य जीवात्मनोऽन्यः कश्चित् स्वामी सम्भोमीति परब्रह्मणा परमेश्वरेण स्वकर्मणा सम्पाद्यते । न च मुख्ये सम्भवति ग्रहणं न्यायविदो न्याय्यं मन्वते । यस्य चैतत् स्वं यश्चैष स्व- वास्य स्वस्वामिभावः सम्बन्धः । स्वामिनश्च परिच्छिन्नस्य स्वपुरैकदे- दृष्टा ...। पञ्चमजार्जस्य, राज्ञो वा गायकवाडस्य । परिच्छि- जीवात्मेति तेनैवास्य ब्रह्मपुरस्य शरीरस्यान्तर्हृदयपुण्डरीके वेश्मनि तव्यम् । तथा च को नु नाम जीवात्मनोऽन्यो दहराकाशो भ- विज्ञायते । द्यावापृथिव्यादीनां च सर्वपदार्थानां तत्र वासना- समाहितत्वोपपत्तेराकाशोपमितत्वमपि न विरुध्यते "**यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः, उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते, उभावग्निश्च सूर्याचन्द्रमसावुभौ, विद्युन्नक्षत्राणि, यच्चास्येहास्ति यच्च नास्ति, सर्वं तदस्मिन् समाहितम्**" ( छां० ८ । इति । **समाहितत्वं**=प्रतिष्ठितत्वम् । तस्माज्जीवात्मैवेह दहर न परब्रह्म परमेश्वर इति । **एवं** प्राप्तेऽभिधीयते–**दहर** उत्तर- उत्तरत्र खलु प्रकृतं दहराकाशमेतच्छब्देन परामृश्य तस्यात्मत्वादि- कमपहतपाप्मत्वादयो धर्माः केचनाम्नायन्ते "**एष आत्माऽपहत- पाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः**" ( छां० ८ । १ । ५ ) इति । परब्रह्मणः परमेश्वरादन्यत्र जीवात्मन्युपपद्यन्ते । तस्य पाप्मादिभिः तदभावस्य सिद्धत्वात् । जीवात्मा हि दिवानिशं पाप्मना संयुज्यते संयुज्येत न तद्विनिर्मोकं प्रार्थयेत । प्रार्थयमानश्चोपलभ्यते "जा-

सुनवाम सोममरातीयतो निदहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरिताऽत्यग्निः" (ऋ० १। ७।७।१) दुरिता=दुरितानि। "विश्वानि देव! सवितर्दुरितानि परासुव। यद् भद्रं तन्न आसुव" (ऋ० ४।४। २५।५) "अग्ने नय सुपथा राये अस्मान् विश्वानि देव! वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम" (यजु० ४०। १६) "यद् विद्वांसो यदविद्वांस एनांसि चकृमा वयम्। यूयं नस्तस्मान्मुञ्चत विश्वे देवाः सजोषसः" (अथ० ६। १२।११५।१) इति। यस्य चास्त्यहर्निशं पाप्मना संयोगः स जायते म्रियते जीर्य्यति शोचति विजिघत्सति पिपासति चेति सुध्रुवम्। सति कर्मणि तत्फलस्य जन्मादेरावश्यकत्वात्। यत्रेदं श्रूयते "तयोरन्यः पिप्पलं स्वाद्वत्ति" (ऋ० २।३ ।१७।२०) "अपाङ् प्राङेति स्वधया गृभीतः" (ऋ० २।३।२१।३८) "कृतस्य तस्यैव स चोपभोक्ता" (श्वे० ५। ७) "अजीर्य्यताममृतानामुपेत्य जीर्य्यन्मर्त्यः क्वधस्थः प्रजानन्" (कठ० १।२८) "अनीशया शोचति मुह्यमानः" (मु० ३।१।२) "स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः" (छां० ३।१७।१) इति। लिङ्गं चोपलभ्यते "स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं न जरया बिभेति। उभे तीर्त्वाऽशनायापिपासे शोकातिगो मोदते स्वर्गलोके" (कठ० १। १२) इति। सत्यकामत्वं सत्यसङ्कल्पत्वं च न जातु मात्रयाऽपि लोचामहे। नह्यसौ यद् यत् कामयते सङ्कल्पयते च तत्सर्वं तस्य यथाकामं यथासङ्कल्पं च सम्पद्यते। परब्रह्म परमेश्वरस्तु न तथा। स न कर्हिचित् पाप्मना संसृज्यते न जीर्य्यते न म्रियते न शोचति न विजिघत्सति न पिपासति सत्यं कामयते तथ्यं च सङ्कल्पयते। यत्रेदमाम्नातम् "शुद्धमपापविद्धम्" (यजु० ४०।८) "व्यावृत्तः स पाप्मना"

(अथ० १० । ४ । ७ । ४०) "स एष सर्वेभ्यः पा
उदितः" (छां० १ । ६ । ७) "तं मा भगवान् 
पारं तारयतु" (छां० ७ । १ । ३) "स वा एष म
आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म" (बृ० ४ । ४
"वेदाहमेतमजरं पुराणम्" (श्वे० ३ । २१) "न तद
किञ्चन न तदश्नाति कश्चन" (बृ० ३ । ८ । ८) "त
दग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्"
८ । ७ । १७ । ४) "स ईक्षत लोकान्नु सृजा इति
स इमाँल्लोकानसृजत" (ऐत० १ । १-२) इति ।
एवेह दहराकाश इति विज्ञायते । "तद् यथेह कर्मचितो
क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते"
८ । १ । ६) इति फलबुद्ध्याऽनुष्ठितानां कर्मणामन्तवत्
"अथ य इहात्मानमनुविद्य व्रजन्त्येताँश्च सत्यान्
तेषां सर्वेषु लोकेषु कामचारो भवति" (छां०
६) इत्यादिना "यं यमन्तमभिकामो भवति यं
सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो
(छां० ८ । २ । १०) इत्यन्तेन च प्रकृतदहराकाशविदो
योगिनः सर्वलोकेषु कामचारः फलमाख्यायते । तच्च दहरा
मेश्वरत्वे सङ्गच्छते न जीवात्मत्वे । नहि केवलं जीवात्मानमु
श्चित् सर्वलोकेषु कामचारं लभते । यच्चोक्तं परब्रह्मणः परमे
रत्वं नोपपद्यते, विभुत्वादिति । तदग्रे स्वयमाचार्यः प्रति
ब्रह्मपुरव्यपदेशश्चासाधारणत्वेऽपि न जीवात्मनिबन्धनः प्रवर्तते,
वात्मा दहराकाशः परिकल्प्येत, किं तर्हि ? परब्रह्मोपलब्धि
शरीरे ह्यस्मिन् मुमुक्षूणां परब्रह्म परमेश्वरस्तावदुपलभ्यते नान्य
पलब्धिः प्रत्यसाधारणमेतत् । अतो ब्रह्मपुरमिति व्यपदिश्यते
वा जीवात्मनिबन्धनो ब्रह्मपुरमिति व्यपदेशः, तथापि न
जीवात्मा भवितुमर्हति । राजपुरे मूलराजगेहवदुपपत्तेः ।

पुण्ये खलु पुण्यधवले रणजिद्राजराजपुरे **लवपुरे** मूलराजस्य गेहमुपपद्यते तथा जीवात्मपुरे शरीरे परब्रह्मणः परमेश्वरस्यापि सद्म हृदयपुण्डरीमुपपद्यते नास्ति कश्चिद् विरोधः। **एतेन** स्वस्वामिभावसम्बन्धोऽपि व्याख्यातो द्रष्टव्यः। सर्वाधारस्यापि तस्याधेयत्वं च हृदयपुण्डरीकोपाध्यपेक्षया सेत्स्यति नास्ति तदनुपपत्तिः। **द्यावापृथिव्यादीनां** वासनारूपेणान्तःसमाहितत्वोपपादनं चातिक्लिष्टम्। नह्यसति बलीयसि बाधके मुख्यं तत्समाधानमुपेक्षितुं शक्यते। न च तादृक्षो बाधकः कश्चिदिह लक्ष्यते। दहराकाशस्य जीवात्मत्वे चास्त्याकाशेनोपमानोपमेयभावो बाधको बलीयान्। न च सति तस्मिन् तस्य तत्त्वमाश्रयितुं शक्यते। न च वासनारूपेण द्यावापृथिव्यादीनामन्तःसमाहितत्वमुपपाद्य यथाकथञ्चित् साम्यं परिकल्प्य तदुपमानोपमेयभावसमर्थनमपि विद्याचुञ्चुभ्यो विद्वद्रूपेभ्यो रोचते। जघन्यत्वात्। **अथोच्येत** दहराकाशस्य परमेश्वरत्वेऽपि बाह्याकाशेनोपमानोपमेयभावो न घटते **"ज्यायानाकाशात्"** (शत० १०। ६। ३। २) **"ज्यायान् पृथिव्या ज्यायानन्तरिक्षात्"** (छां० ३। १४। ३) इत्यादिश्रुतिभ्यस्तस्याकाशतो ज्यायस्त्वावधारणादिति। **नैतद् वक्तव्यम्**। उपाधिप्राप्तपरिच्छिन्नत्वनिवृत्त्यर्थत्वेनोपपत्तेः। यथा हि लोके खलु वेगेन गच्छन् सूर्य्य इषुवद्गच्छतीति गतिमान्द्यनिवृत्त्यर्थमिषुणा तावदुपमीयते तथा हृदयपुण्डरीकोपाधिप्राप्तपरिच्छिन्नत्वनिवृत्त्यर्थं परब्रह्म परमेश्वरोऽपि बाह्याकाशेनोपमीयते **"यावान् वा अयमकाशस्तावानेषोऽन्तर्हृदय आकाशः"** (छां० ८। १। ३) इति, न परमार्थतस्तत्साम्यावबोधनार्थम्। अतस्तेन तस्योपमानोपमेयभावो घटते नास्ति कश्चिद्दोषः। **अथोच्येत**—भवतु दहराकाश इह परब्रह्म परमेश्वरः, तथापि न सोऽन्वेष्टव्यो वा विजिज्ञासितव्यो वा भवितुमर्हति। तदन्तर्वर्तिनः पदार्थान्तरस्य तथात्वानुशासनात् **"तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्"** (छां० ८। १। १) इति। **नैतद् वक्तव्यम्**। अन्तर्वर्तिना सह तस्यैव तथात्वोपदेशात्। त्रयः खलु पदार्था-

अभ्युपगम्यन्ते प्रकृतिर्जीवात्मा परमात्मा च । **तत्र** परमात्मा नन्याधारत्वात् स्वमहिम्नि विराज्यते, सविकारा प्रकृतिर्जीवात्मा धारतया तत्रावतिष्ठेते । त्रयाणां चामीषां यावत्सविकारा प्रकृतिर्न यते तावज्जीवात्मा न विज्ञातुं शक्यते । यावच्च जीवात्मा न तावत् परमात्माऽपि न विज्ञातुं पार्य्यते । स हि तदन्तरात्मतया स्वरूप इत्यभ्युदयनिःश्रेयसकामानां मुमुक्षूणामन्तर्वर्तिना तेन ष्टव्यो विजिज्ञासितव्यश्चोपदिश्यते । यदि ह्यसौ न तथोपदिश्येत वर्तिमात्रं चानुशिष्येत तदा **"यावान् वा अयमाकाश षोऽन्तर्हृदय आकाशः"** ( छां० ८ । १ । ३ ) इति दह बाह्याकाशेनोपमानोपमेयभावप्रदर्शनं नोपयुज्येत । नह्यन्यस्योपदे माणेऽन्यस्योपमानोपमेयभावप्रदर्शनमुपयुज्यते । **वाक्यशेषानु** **"अस्मिन्**=दहराकाशे **कामाः**=काम्यमानाः प्रकृतितद्वि द्यावापृथिव्यादयो लोकाः **समाहिताः**=प्रतिष्ठिताः, **एष** अ **पहतपाप्मा"** ( छां० ८ । १ । ५ ) इत्यादिना प्रकृतं द्यावा दिसर्वलोकसमाधानाश्रयं दहराकाशं परामृश्याधीयते हि **"अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्या स्तेषां सर्वेषु लोकेषु कामचारो भवति"** ( छां० ६ ) इति । न चोपक्रमे तदन्तर्वर्तिमात्रमन्वेष्टव्यमुपदिष्टमिति शेषोऽयं कथञ्चिदुपपद्यते । नहि तत्र समुच्चयार्थकस्य चशब्द दन्तर्वर्तिना सह दहराकाशोऽन्वेष्टव्य उक्त इति स्फुटं नाधिग तथाऽनुशासने चोपक्रमेऽपि तथोपदेशो मन्तव्यः । उपक्रमोप वाक्यतायाः सर्वसिद्धत्वात् । नह्युपक्रमेण वाक्यशेषस्य, तस्य च रोधो युज्यते । तस्मादुपक्रमेऽपि हृदयपुण्डरीकवेश्माधारो दहरा वर्तिना सहान्वेष्टव्य उपदिष्ट इति प्रतिपद्यते । **तथा** वाक्यस्यैषोऽर्थो निष्पन्नः "यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्ड तस्मिन् यो दहराकाशो यच्च तदन्तर्वर्ति चिदचिदात्मकं विश्वं भयमन्वेष्टव्यं तदुभयं वाव विजिज्ञासितव्यम्" इति । तत्रान्त

कारा प्रकृतिर्जीवात्मा चेति द्वयम् । तदाधारो दहराकाशश्चोत्तरेभ्यो हेतुभ्यः परब्रह्म परमेश्वर इत्यध्यवसीयते ॥ १४ ॥

यदुक्तमुत्तरेभ्य इति । तदेव प्रपञ्चयिष्यन्नाह—

**"गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च" ॥ १५ ॥**

ब्रह्मेत्यधिक्रियते । दहर इत्यनुवर्तते । **गतिशब्दाभ्यां**=गतिर्गमनं प्राप्तिः, शब्दो ब्रह्मलोकशब्दः, ताभ्याम्—अहरहः सुषुप्तौ जीवात्मनामभिहितायास्तस्मिन् गतेः, प्रयुक्ताद् ब्रह्मलोकशब्दाच्च दहराकाशः परब्रह्म परमेश्वरोऽवगम्यते । **तथा हि**=यथा दहराकाशे तथैव परब्रह्मणि परमेश्वरे **दृष्टं**=श्रुत्यन्तरेऽभिहितं प्रयुक्तं चैतदुभयं दृष्टं **लिङ्गं च**=तस्य तत्त्वे भवति लिङ्गं चेत्यर्थः ।

अस्ति खलु वाक्यशेषः **"तद् यथाऽपि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः, एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति, अनृतेन हि प्रत्यूढाः"** ( छां० ८ । ३ । २ ) इति । तत्र **"एतम्"** इति प्रकृतं दहराकाशं परामृश्य यस्तावत् तद्गोचरः **"ब्रह्मलोकम्"** इति ब्रह्मलोकशब्दः प्रयुज्यते, या च **"अहरहर्गच्छन्त्यः"** इति प्रत्यहं तद्गोचरा सुषुप्तौ गतिः प्रजाशब्दानां जीवात्मनामभिधीयते तावेतौ दहराकाशस्य परमेश्वरत्वं स्फुटमवगमयतः, जीवात्मत्वं च वारयतः । नहि जीवात्मानः प्रजा अहरहर्जीवात्मानं गच्छन्तीति कथञ्चित् सङ्गच्छते । **श्रुत्यन्तरदर्शनाच्च** । श्रुत्यन्तरे खलु सुषुप्त्यवस्थायां जीवात्मनामहरहः परब्रह्मपरमेश्वरगोचरा गतिरभिधीयमाना दृश्यते **"स एनं यजमानमहरहर्ब्रह्म गमयति"** ( प्र० ४ । ४ ) इति । **"यत्रैतत् पुरुषः स्वपिति नाम सता सोम्य! तदा सम्पन्नो भवति"** ( छां० ६ । ८ । १ ) इति च । **तथा** तद्गोचरो ब्रह्मलोकशब्दोऽपि प्रयुज्यमानो निरीक्ष्यते **"ब्रह्मलोकमभिसम्पद्यते"** ( छां० ८ । १५ । १ ) **"एष ब्रह्मलोकः सम्राडिति हैनम-**

**नुशशास याज्ञवल्क्यः**" (बृ० ४ । ३ । ३२) इति। दहराकाशः परब्रह्म परमेश्वरो न भवेत् तदा न जातु समानविषये न्तरे तद्गोचरा गतिरभिधीयमाना दृश्येत, नापि ब्रह्मलोकशब्दस्तत्र मानो निरीक्ष्येत । नहि समानविषयाणां श्रुतीनां परस्परं विरोधो नाप्येकत्र दृष्टस्यान्यत्रानाश्रयणम् । तदेतदपि तस्य परमेश्वरत्वेऽपि लिङ्गम् । ब्रह्मलोकशब्दश्चेह निषादस्थपतिन्यायेन सामानाधिकरण्ये प्रवर्तते ब्रह्म च तल्लोकश्चेति, न षष्ठीतत्पुरुषवृत्त्या ब्रह्मणो लोके गौरवपराहतत्वेन निर्बलत्वात् । परब्रह्म परमेश्वरस्तु हृदयपुण्डरीके लोक्यते योगिभिः समाध्यवस्थायां चैतन्यात्मना स्वेनेति भवति लोकः । निषादस्थपतिन्यायश्च पूर्वमीमांसायां षष्ठाध्याये वर्तते "**स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात्**" (मी० ६ । १ ।...) इति । तं वयं तत्रैव यथावसरं व्याख्यास्याम इति सर्वमनवद्यम् ।

**गतिशब्दाभ्यां** दहराकाशः परब्रह्म परमेश्वर इति साधितम् हेत्वन्तरं समुच्चिनोति—

**"धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः"** ॥ १६ ॥

ब्रह्मेत्यधिक्रियते । दहर इत्यनुवर्तते । पूर्वत्रैवायं हेतुरिति न... च्यते । **धृतेः**=भावे क्तिन्–प्रत्ययः, जगतो धारणाद् दहराकाशः परमेश्वरोऽध्यवसातव्यः, कुतः ? **अस्य**=जगद्धारणलक्षणस्यास्य महिम्नः प्रभावस्या**स्मिन्**=जगज्जन्मादिहेतौ भगवति परब्रह्मण्येवास्मिन्नुपलब्धेः श्रुत्यन्तरत उपलम्भादित्यर्थः ।

प्रक्रियते खलु दहराकाशः "**दहरोऽस्मिन्नन्तराकाशः**" (छां० ८ । १ । १) इति । तत्र बाह्याकाशोपमापूर्वकं द्यावापृथिव्यादिसर्वलोकसमाधानमुक्त्वाऽऽत्मशब्दं प्रयुज्यापहतपाप्मत्वादिधर्मैः प्रतिपादितः । तमेव पुनरनतिवृत्तप्रकरणमिहात्मशब्देन पठ्यते "**अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय**" (छां० ८ । ४ । १) इति । तत्र वि...

कर्तरि क्तिच्—प्रत्ययः, विधारयितेति तदर्थः । तदिदं पठ्यमानं सर्वलोकात्मनो जगतो विधारणं दहराकाशस्य परमेश्वरत्वे भवति हेतुः । नहि जीवात्मा सर्वमिदं जगद् विधारयितुमर्हति । तस्माददृष्टद्वारा तत्कल्पनं त्वतिक्लिष्टं न बुद्धिसोपानमधिरोहति । न वा क्वचिच्छ्रुतिष्वन्यत्र पठ्यमानमीक्ष्यते । भगवतः परमेश्वरस्य चैष सर्वजगद्धारणलक्षणो महिमा वेदोपनिषत्सु सर्वत्र पठ्यमान उपलभ्यते **"यदध्यतिष्ठद् भुवनानि धारयन्"** ( ऋ० ८ । ३ । १६ । ४ ) **"स दाधार पृथिवीं द्यामुतेमाम्"** (ऋ० ८ । ७ । ३ । १) **"स्कम्भो दाधार द्यावापृथिवी उभे इमे"** (अथ० १० । ४ । ७ । ३५) **"एतस्य वा अक्षरस्य प्रशासने गार्गि! सूर्य्याचन्द्रमसौ विधृतौ तिष्ठतः"** (बृ० ३ । ८ । ९) **"एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय"** ( बृ० ४ । ४ । २२ ) इति । न च दहराकाशस्य परमेश्वरत्वाभावे तन्महिमाऽयं तत्र पठितुं शक्यते । पठ्यते च । तस्माद्गम्यते नूनं परब्रह्म परमेश्वरो दहरः ॥ १६ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"प्रसिद्धेश्च" ॥ १७ ॥**

ब्रह्मेत्यधिक्रियते । दहर इत्यनुवर्तते । हेत्वन्तरपरश्चकारः । प्रसिद्धेः=आकाशशब्दस्य परब्रह्मणि परमेश्वरे प्रसिद्धेरिह दहराकाशः परब्रह्म परमेश्वरो गम्यत इत्यर्थः ।

अस्ति तावदाकाशशब्दस्य परब्रह्मणि परमेश्वरे प्रसिद्धिः **"को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्"** ( तै० २ । ७ ) **"आकाशो वै नाम नामरूपयोर्निर्वहिता"** ( छां० ८ । १४ । १ ) इति । तथा तत्पर्यायप्रसिद्धिरपि **"ऋचो अक्षरे परमे व्योमन्"** ( ऋ० २ । ३ । २१ । ३९ ) **"सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रति-**

ष्ठिता" (तै० ३ । ६) इति । न च तदतिक्रमोऽसति बा ज्यते । जीवात्मनि च न तत्प्रसिद्धिमीक्षामहे । भूताकाशस्तूप भावाद्यसम्भवात् सत्यामपि प्रसिद्धौ न परिगृह्यते । तस्मादि परमेश्वरो दहराकाश इति निश्चयः ॥ १७ ॥

उपपादितः सिद्धान्तः । पूर्वः पक्षः सम्प्रत्याशङ्क्य व्युदस्यते ।

**"इतरपरामर्शात् स इति चेन्नासम्भवात्"।**

दहर इत्यनुवर्तते **इतरपरामर्शात्**=परामर्शोऽत्र सम्ब ब्रह्मणः परमेश्वरादितरस्य जीवात्मनो वाक्यशेषे सम्बन्धात् दहराकाशः स्यादिति **चेत्**=यद्युच्यते तदा **न**=न वाच्य **असम्भवात्**=पूर्वोक्तापहतपाप्मत्वादिदहरधर्माणामितरस्मिन् सम्भवादित्यर्थः ।

**अथोच्येत**—न खलु वाक्यशेषगतेभ्यो गत्यादिभ्यो दहराकाशः परब्रह्म परमेश्वरः सेद्धुमर्हति । मध्ये जीवा मर्शात् । अस्ति तावद् विधृतेः पूर्वमुत्तरत्राभिहितस्य जी परामर्शः **"अथ य एष सम्प्रसादोऽस्माच्छरीरात्स परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत त्मेति होवाच"** (छां० ८ । ३ । ४) इति । राकाशः परब्रह्म परमेश्वरोऽभविष्यत् तदा न जातूत्तरस्मात् क्यादत्र वाक्यशेषे जीवात्मानं परामृक्ष्यत् । नहि तस्य परमेश्व मर्शो युज्यते । **न** च सम्प्रसादशब्द इह परब्रह्म परमेश्वरं ताव तुमर्हति । तत्र तत्प्रयोगानुपलब्धेः । नहि यस्य शब्दस्य कुत्रापि प्रयोगो नोपलभ्यते । स तमर्थं कर्हिचिदुपस्थापयि नन्वेवमेष जीवात्मानमपि नोपस्थापयिष्यति । तत्रापि तत् म्भादिति चेत् । **न** । तत्र तत्प्रयोगानुपलम्भेऽपि तदवस्थाया सत्यं जीवात्मनि सम्प्रसादशब्दप्रयोगो नोपलभ्यते तथापि सुषुप्तावुपलभ्यते **"स वा एष एतस्मिन् सम्प्रसादे**

प्रसङ्गात्। न चान्यायः परमेश्वरं पश्यति मानुषे स्वामिन्यपि कदाचित् सम्भाव्यते, परमेश्वरे स्वामिनि साक्षादिति तु किमु वक्तव्यम्। अनुशासनं च भगवतस्तस्य वेदः। **तस्मा**दस्ति सोऽपि नित्यः। **नित्यत्वं** च जगदिव प्रवाहतो न तु स्वरूपतो जीवात्मादिवदित्यनन्तरं विस्पष्टयिष्यते ॥ २९ ॥

**ननु** वेदस्य नित्यत्वमिति विरुद्धमुच्यते, तस्योत्पत्तिमत्त्वेन विनाशावश्यम्भावात्। विनष्टस्य प्रतिसर्गमावृत्तौ च पूर्ववदुत्पत्त्यसम्भवात्। नहि विनष्टोत्पन्नं वस्तु कदाचित् समाननामरूपमुत्पद्यते? तत्राह—

**"समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च" ॥ ३० ॥**

शब्दस्य, नित्यत्वे, इति पदद्वयं षष्ठ्या सप्तम्या च विपरिणम्यानुवर्तते। तदुपपादकं हेत्वन्तरमेतदिति चार्थः। **आवृत्तावपि**=शब्दस्य वेदस्य प्रतिसर्गमुत्पत्तावप्य**विरोधः**=नित्यत्वे विरोधो नास्ति, कुतः? **समाननामरूपत्वात्**=**"ऋग्, यजुः"** इत्यादिकं नाम, **"अग्निमीळे पुरोहितम्"** इत्याद्यानुपूर्वीविशेषो रूपम्, ते नामरूपे प्रतिसर्गं समाने यस्य, तस्य भावस्तत्त्वं, **तस्मात्**–प्रतिसर्गसमाननामरूपत्वात्। ईदृक् तस्य नित्यत्वं कुतोऽवगम्यते यत्रोत्पत्तावपि विरोधो न प्रसज्यते? **दर्शनात्**=मन्त्रवर्णात्, **स्मृतेश्च**=ऋषीणां स्मरणाच्चेत्यर्थः।

यन्नामा यदानुपूर्वीकः खलु भगवान् वेदोऽस्मिन् सर्गे परब्रह्मणा परमेश्वरेणर्षिभिः प्रादुरभावि सर्गान्तरेष्वपि तन्नामा तदानुपूर्वीक एव प्रादुर्भाव्यते। न तत्र नाम भिद्यते, नाप्यानुपूर्वी, केवलमृषिव्यक्तयो भिद्यन्ते। न चेदृशस्तस्य प्रादुर्भावः सर्वज्ञसर्वशक्तौ भगवति तस्मिन् कस्मैचिदायासाय कल्पते, येन पर्य्यनुयुज्येत। स हि सर्वज्ञः सर्वशक्तिः। अचलं च तदनुशासनम्। न च प्रलयव्यवधानमात्रेण नाम्ना वाऽऽनुपूर्व्या वा विच्छेदमापद्यते। विच्छेदे तस्याचलत्वभङ्गापत्त्या परमेश्वरानुशासनत्वं हीयेत। तदनुशासितुः परमेश्वरस्य च भूतभविष्यद्वर्तमानसर्वार्थज्ञातृत्वं पीड्येत। नहि यस्य ज्ञानमात्मनि नावतिष्ठते

प्रतिसर्गं च विपरिवर्तते तस्य कालत्रयवर्तिनिखिलार्थज्ञातृत्वं उपपद्यते, ज्ञानं च यथार्थं घटते । अस्ति च परमेश्वरः सर्वः सर्वार्थज्ञाता । यत्रेदमाम्नायते **"अतो विश्वान्यद्भुता चि- अभिपश्यति । कृतानि या च कर्त्वा"** ( ऋ० १ । १८ । ११ ) **"यः सर्वज्ञः सर्ववित्"** ( मुं० १ । **"स विश्वकृद् विश्वविदात्मयोनिर्ज्ञः कालकालो सर्वविद् यः"** ( श्वे० ६ । १६ ) इति । यदा खलु विज्ञेयाः पदार्था अपि भगवतस्तस्माद् यथापूर्वमुत्पद्यन्ते, तम् **"सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । पृथिवीं चान्तरिक्षमथो स्वः"** ( ऋ० ८ । ८ । इति, तदा तद्विज्ञानलक्षणो वेदो भगवतस्तस्माद् नाम्ना रूपे पूर्वं प्रादुर्बोभूयत इति किमु वक्तव्यम् । **सोऽयं** प्रतिसर्ग प्रवाहाविच्छेदस्तावद् भगवतो वेदस्य नित्यभावः । न च मुत्पत्तावपि विरुध्यते । नहि प्रतिसर्गं प्रादुर्भवतो यस्यार्थः रूपं च न जातु मात्रयाऽपि विशिष्यते स नित्यो नाख्यातुं नानाविधं हि पदार्थेषु नित्यत्वं क्वचिदुत्पत्तिविनाशशून्यत्वं स्थायित्वं क्वचिच्च नामरूपप्रवाहविच्छेदरहितत्वम् । किमि- मिव लोकसे । **पदार्थस्वभावनानात्वेन तन्नित्यत्व- स्याप्यौचित्यात्** । पदार्थाः खलु निसर्गतो नानाविधा तेषां नानाविधत्वे च तन्नित्यत्वेनापि नानाविधेन भवितव्यम् कथमिमे सर्वासु कक्षासु नानाविधा आख्यायेरन् । तत्राद्यं श्वराणां, द्वितीयं वाय्वाकाशप्रभृतीनां, तृतीयं च भगवतो विज्ञातव्यम् । **तदिदं** वेदनित्यत्वं च मन्त्रसरणे व्यक्तमव- अस्ति तावन्मन्त्रः **"तस्मै नूनमभिद्यवे वाचा वि- त्यया । वृष्णे चोदस्व सुष्टुतिम्"** ( ऋ० ६ । ५ । इति । **विरूप**=हे विशिष्टस्वरूप विद्वन् ! त्वं **नूनं**=निश्चयेन सर्वतो व्यापकाय **वृष्णे**=कर्मफलवर्षकाय **तस्मै**=प्रसिद्धाय

स्वरूपाय परमेश्वराय **नित्यया**=नामरूपप्रवाहविच्छेदरहितयाऽनादिनिधनया **वाचा**=वेदवाण्या **सुष्टुतिं**=प्रियां स्तुतिं **चोदस्व**=विधत्स्वेत्यर्थः । **"अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् । दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्"** (मनु० १ । २३) इति । ब्रह्म=वेदः । सनातनं=नित्यम् । महाभारतं च **"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः"** (महाभा० १२ । २३३ । २४) इति । **तस्माद्** वेदस्य प्रतिसर्गमुत्पत्तावपि नास्ति नित्यत्वे कश्चिद् विरोधः ॥ ३० ॥

**शास्त्रस्य** मनुष्याधिकारत्वादित्युक्तम् । तत्र मनुष्यशब्दो मनुष्यमात्रपरः प्रयुज्यते न त्रैवर्णिकपर इति विज्ञापयितुं पूर्वं तावदधिकारचिन्तनदक्षस्य शास्त्रे शूद्राधिकारं व्यासेधतः स्वशिष्यस्य जैमिनेः पूर्वः पक्ष उपन्यस्यते—

**"मध्वादिष्वसम्भवादनधिकारं जैमिनिः"** ॥ ३१ ॥

**मध्वादिषु**=मधुच्छन्दःप्रभृतिषु वेदप्रकाशकर्षिष्व**सम्भवात्**=कस्यापि शूद्रयोनौ सम्भवाभावाद**नधिकारं**=शास्त्रे शूद्राधिकाराभावं **जैमिनिः**=जैमिनिराचार्य्यो मन्यत इत्यर्थः ।

**यावन्तः** खलु मनुष्याः क्षोणीतलमधिशेरते ते सर्वे पूर्वं द्वेधा विभज्यन्त आर्य्या दस्यवश्चेति । यत्रेदमाम्नातम् **"विजानीह्यार्य्यान् ये च दस्यवः"** (ऋ० १ । ४ । १० । ८) इति । **"त्वं दस्यूँरोकसो अग्न आज उरु ज्योतिर्जनयन्नार्य्याय"** (ऋ० ५ । २ । ८ । ६) इति च । **ये** शब्दप्रमाणं दस्यन्ति=शब्दः प्रमाणं येषां न विद्यते, ते **दस्यवः**, तद्विपरीता**श्चार्य्याः** । ते च प्रधानतश्चतुर्भिर्वर्णैर्विभज्यन्ते ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति । यत्रेदमाम्नायते—**"ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः । उरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत"** (ऋ० ८ । ४ । १९ । १२) इति । **पद्भ्यां**=पादौ । प्रथमार्थे पञ्चमी । तत्राद्यास्त्रयस्त्रै-

वर्णिका इत्याख्यायन्ते, चतुर्थः शूद्रस्त्वेकवर्ण इति । तेषां कस्या-
धिकारो विद्यते कस्य न विद्यत इति शास्त्रसाहाय्येनैव ज्ञातुं
शक्यते नान्यथा । नहि शास्त्राधिकारचिन्तायां तदनपेक्षितप्रमाणा-
वलम्बनं कथञ्चिद् युज्यते । शास्त्रदर्शनाच्च त्रैवर्णिकानामेव तत्रा-
गम्यते न शूद्रस्य । स्मर्य्यन्ते खलु मधुच्छन्दःप्रभृतयस्तत्प्रकाशकाः
केचिदृषयः । न च तेषां ब्राह्मणक्षत्रियवैश्ययोनिसम्भववच्छूद्रयोनिस-
म्भवोऽपि कश्चिदधिगम्यते । शास्त्रं चेच्छूद्रमप्यधिकुर्य्यादवश्यं तत्प्र-
काशकेषु तेषु शूद्रयोनिसम्भवोऽपि कश्चिदधिगम्येत । नहि तदः-
भावे तत्र तदधिकारः कल्पयितुं शक्यते । स्पष्टं ह्येतद्-अस्ति चे-
शूद्रस्याप्यधिकारः कुतो न त्रैवर्णिकवत् स तत्प्रकाशक उप-
यथा खलु मानुषाधिकारस्य सूचको मानुषैर्ऋषिभिः सर्गादौ शास्त्र-
इष्यते तथा शूद्राधिकारस्य सूचकः शूद्रेणापि तत्प्रकाशकैस्त्रैवर्णिक-
इति युक्तं विज्ञायते । यस्य यस्य तत्राधिकारोऽस्ति तेन तेन त-
स्यौचित्यात् । वयं तु प्रायेण ब्राह्मणक्षत्रियवैश्ययोनिसम्भवान्
च्छन्दःप्रभृतीनृषीन् तत्प्रकाशकान् पश्यामो न शूद्रयोनि-
काँश्चिदृषीन् । किमत्र कारणम्? इदमेव कारणं ब्राह्मणादयस्त्रय-
त्राधिक्रियन्ते न शूद्रश्चतुर्थो वर्ण इति । **तस्माच्छास्त्रे त्रैवर्णिकानामे-**
वाधिकारोऽस्ति न चतुर्थवर्णस्य शूद्रस्येति जैमिनिराचार्य्यो मन्यते ।

**अत्रैव हेत्वन्तरं समुचिनोति—**

**"ज्योतिषि भावाच्च" ॥ ३२ ॥**

अनधिकारं जैमिनिरित्यनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति ।
**ज्योतिषि**=ज्योतिष्पदयुक्ते मन्त्रे **भावात्**=त्रयाणां ब्राह्मण-
श्यानामाम्नानस्य सत्त्वाच्चतुर्थस्य शूद्रस्य शास्त्रेऽनधिकारं जैमिनि-
मन्यत इत्यर्थः ।

यथा हि **"पवमानः सो अद्य नः पवित्रेण विच-**
**यः पोता स पुनातु नः"** (ऋ० ७ । २ । १७ ।

पवमानपदयुक्तः खलु मन्त्रः **"पवमानः"** इति व्यपदिश्यते, यथा वा लोके **"महिम्नः पारं ते"** इति महिम्नपदयुक्तं स्तोत्रं "महिम्नः" इति संशब्द्यते, तथाऽत्रापि ज्योतिष्पदयुक्तो मन्त्रो लाघवाज्ज्योतिरित्युपनिबध्यते, यथा **"अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात् तत्क्रतुश्च"** (वे० ४।३।१५) इत्यत्र तत्क्रतुपदयुक्ता श्रुतिः **"तत्क्रतुः"** इति। विद्यते च स एष मन्त्रः **"यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा। प्रजापतिः प्रजया संरराणस्त्रीणि ज्योतींषि सचते स षोडशी"** (यजु० ८।३६) इति। **यस्मात्**=प्रजापतेः परमात्मनः सकाशात् **परः**=उत्तमोऽ**न्यः**=द्वितीयो **जातः**=प्रसिद्धो **नास्ति**=न विद्यते, यः प्रजापति**र्विश्वा**=विश्वानि **भुवनानि**=भूतजातान्या**विवेश**=व्याप्याधितिष्ठति, स **षोडशी**=महदादिक्रमेण सर्वलोकरचयिता प्रभुः **प्रजया**=चतुर्थ्यर्थे तृतीया, स्वीयायै प्रजायै **संरराणः**=कर्मफलं प्रददान**स्त्रीणि**=ब्राह्मणः क्षत्रियो वैश्य इति त्रीणि, विधेयापेक्षया नपुंसकम्, **ज्योतींषि**=वेदलक्षणा वाग् ज्योतिः **"वाचैवायं ज्योतिषाऽऽस्ते"** (बृ० ४।३।५) इति वाचो ज्योतिष्ट्वश्रुतेः, तदाश्रयत्वाज्ज्योतींषि **सचते**=समवैति कुरुते विधत्ते निर्मिमीत इत्यर्थः। यथा खलु तेजोमयेन ज्योतिषा सततं प्रकाशनात् सूर्य्यादयो ज्योतींषि व्याख्यायन्ते तथा शास्त्रमयेन ज्योतिषा प्रकाशनाद् ब्राह्मणादयस्त्रैवर्णिका अपि ज्योतींषि व्यवह्रियन्ते। समानं ह्युभयत्र ज्योतिष्ट्वं तेजोभेदः। **अत्र** त्रीणीति वचनात् त्रैवर्णिकानामेव शास्त्रेऽधिकारो न शूद्रस्येति स्फुटमवगम्यते। नहि शूद्रस्याप्यधिकारे "त्रीणि ज्योतींषि" इति वचनं कथञ्चित् सङ्गच्छते। शूद्रोऽपि चेच्छास्त्रेऽधिक्रियेत तदाऽवश्यं चत्वारि ज्योतींषीत्युच्येत न त्रीणि। शूद्रो हि चतुर्थः। सोऽपि शास्त्रेऽधिक्रियमाणो ब्राह्मणादिवज्ज्योतिष्मान् भवितुमर्हति। न च तथोच्यते। **मन्त्रान्तराच्च**। अस्ति तावदाथर्वणो मन्त्रः **"स्तुता मया वरदा वेदमाता प्रचोदयन्तां पावमानी**

**द्विजानाम् । आयुः प्राणं प्रजां पशुं द्रविणं ब्र-
मह्यं दत्त्वा व्रजत ब्रह्मलोकम्"** ( अथ० १९ । ७१ । १ )
इति । तत्र द्विजानामित्युपादानात् त्रैवर्णिका एव शास्त्रेऽधिक्रियन्ते
इति गम्यते । त्रैवर्णिका हि द्विजा भवन्ति न शूद्रः । तस्मात्
कानामेव शास्त्रेऽधिकारो न शूद्रस्येति जैमिनिराचार्य्यो मन्यते ॥

**जातः** पूर्वः पक्षः । सम्प्रति सिद्धान्त उच्यते—

**"भावं तु बादरायणोऽस्ति हि"** ॥ ३३ ॥

मध्वादिष्वित्यनुवर्तते । तुशब्देन पूर्वः पक्षो व्यावर्त्यते ।
शास्त्रे शूद्राधिकारसद्भावं **बादरायणः**=बादरायणाचार्यो
कुतः ? **हि**=यतो**ऽस्ति**=वेदप्रकाशकर्षिषु मधुच्छन्दःप्रभृतिषु
सम्भवोऽपि विद्यत इत्यर्थः ।

**न** खलु वेदप्रकाशकर्षिषु मधुच्छन्दःप्रभृतिषु कस्यापि
सम्भवाभावाच्छास्त्रे शूद्राधिकाराभावो वक्तुं शक्यते । तत्र तं-
वंस्यापि सद्भावात् । अस्ति तावदिलूषपुत्रः **कवष** ऐलूषो
ऋषिर्यः शूद्रयोनिसम्भवोऽपि मधुच्छन्दःप्रभृतिवद् "अपो-
नाम दाशतय्यां दशमे मण्डले त्रिंशं सूक्तं प्राकाशिष्ट ।
**"ऋषयो वै सरस्वत्यां सत्रमासत । ते कवषमैलूषं
दनयन्, दास्याः पुत्रः कितवोऽब्राह्मणः क-
मध्ये दीक्षिष्टेति । तं बहिर्धन्वोदवहन्, अत्रैनं
हन्तु, सरस्वत्या उदकं मा पादिति । स बहिर्धन्व-
पिपासया वित्त एतदपोनप्त्रीयमपश्यत्"** ( ऐ०
२ । ३ । १ ) इति । न च श्रूयमाणमिदं ब्राह्मणवचोऽसति क-
चिदपवदितुं शक्यते । नहि ब्राह्मणवचसां मन्त्रेभ्योऽन्यः कश्चन
विद्यते । प्रबलानि हि तद्वचनानि वचनान्तरेभ्यः । तद्वच-
सन्निहितत्वात् । मन्त्राश्च ततोऽपि प्रबलाः । परमेश्वरवचनत्वात्
प्रमाणत्वात् । न च मन्त्रेषु कश्चनापि वर्णं प्रति कस्मिन्नपि नि-

पातः समाम्नातो दृश्यते । ते हि मनुष्यमात्रोपकारायावतीर्णा यद्यदाम-नन्ति तत्सर्वमविशिष्टमेवामनन्ति न विशिष्टम् । पश्यतु भवान् तदाम्नानपद्धतिम् । इह तत्प्रदर्शकाः द्वित्रा मंत्रा उदाह्रियन्ते **"रुचं नो धेहि ब्राह्मणेषु रुचं राजसु नस्कृधि । रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम्"** (यजु० १८ । ४८) **"प्रियं मा दर्भ कृणु ब्रह्मराजन्याभ्यां शूद्राय चार्य्याय च । यस्मै च कामयामहे सर्वस्मै च विपश्यते"** (अथ० १९ । ४ । ३२ । ८) **"प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु । प्रियं सर्वस्य पश्यत उत शूद्र उतार्य्ये"** (अथ० १९ । ७ । ६२ । १) इति । न चात्रास्ति मात्रयाऽपि वैशिष्ट्यगन्धः । यथा चेह तथा शास्त्राधिकारविषयेऽप्यवैशिष्ट्यं वेदितव्यम् । एष हि तत्प्रतिपादको मन्त्रः **"यथेमां वाचं कल्याणीमावदानि जनेभ्यः । ब्रह्मराजन्याभ्यां शूद्राय चार्य्याय च, स्वाय चारणाय च । प्रियो देवानां, दक्षिणायै दातुरिह भूयासम् । अयं मे कामः समृध्यताम्, उप माऽदो नमतु"** (यजु० २६ । २) इति । अत्र वेदविदो ब्रह्मदण्डिन उपदिश्यन्ते–**यथा**=येन प्रकारेणाहमिमां=प्रत्यक्षभूतां **कल्याणीं**=कल्याणसाधिकां **वाचं**=वेदवाचं **जनेभ्यः**=सर्वमनुष्येभ्य **आवदानि**=समन्तादुपदिशानि, तथा यूयमप्युपदिशत । जनेभ्य इत्युक्तं विभजते–**ब्रह्मराजन्याभ्यां**=ब्राह्मणक्षत्रियाभ्याम्, **अर्य्याय**=वैश्याय, **शूद्राय**=चतुर्थवर्णाय । विशेषतो विभज्य सामान्यतो विभजते–**स्वाय**=स्वीयायार्य्याय, परब्रह्म-परमेश्वरोऽर्य्यः, तस्यायमिति तद्व्युत्पत्तेः । निराहुश्चैवमेव नैरुक्ताः "आर्य्यः ईश्वरपुत्रः" (नि० ६ । ५ । ४) इति । च=तथाऽ-रणाय=दस्यवे, न रणः शब्दः प्रमाणं विद्यते यस्येति तद्व्युत्पत्तेः । "अरणोऽपार्णो भवति" (नि० ३ । १ । २) इति निरुक्त-वचनात् "अपगतः पानीयसम्बन्धो यस्यावैदिकत्वात्" इति वा तद्व्यु-त्पत्तेः । किञ्च **प्रियः**=यथाऽहं प्रियो **देवानां**=विद्यावतां, **दक्षि-**

**णायै**=दक्षिणाया **दातुः**=प्रदातुः कर्मिणश्च, **इह**=अस्मिन् **भूयासं**=स्याम्, **अयम्**=एष **मे**=मम **कामः**=अभिला[ष] **ध्यतां**=सम्यग् वर्धताम्, **अदः**=असौ वेदलक्षणा वाक् च **नमतु**=न व्यर्थतां प्राप्नोतु, तथा सततं प्रयतध्वमित्यर्थः। [उप]शकाः खलु स्वयं नानुतिष्ठन्ति केवलं परेभ्यश्चोपदिशन्ति त[र्हि] पारमेश्वरं वचोऽपि किं न स्यान्न परे श्रवणमात्रेणाप्याद्रियन्ते, [अनुष्ठानं] तु दूरेणास्ताम् । साधारणजनानामेषा गाथा, विद्वांसः कर्मठाश्च वक्तारमपि न प्रियं मन्यन्ते । तदिदं विद्वदविद्वत्कर्तृकाधि[कार] मनुष्यमात्रकल्याणायोपदिष्टायां वेदवाचि तदानुष्ठानाभावाद् [...] मन्त्रस्यान्तिमभागेन व्यावर्त्यते, वेदोपदेशकानां ब्रह्मदा[यि...] पूर्वं स्वयं तदनुष्ठानं नियमेनोपदिश्यते । **न** च सर्वे[षां] शास्त्राधिकारविषयः संशयः कश्चित् कस्यचिदवशिष्यते । [अस्मा]न्मन्त्रवर्णात् सर्वेषां शास्त्रेऽधिकारोऽविशिष्टः । कर्तव्यगोचरं [...] वयमप्यनुमन्यामहे । यत्रेदमाम्नायते "**ब्रह्मणे ब्राह्मणं** **राजन्यं मरुद्भ्यो वैश्यं तपसे शूद्रम्**" ( यजु० [...] इति । न च कर्तव्यवैशिष्ट्येनाधिकारवैशिष्ट्यं स्यादिति व[क्त]व्यं तस्य निर्बलत्वेन तत्प्रयोजकत्वासम्भवात् । शास्त्रेऽधिक्रि[यमाणः] कर्तव्यभेदे विनियुज्यते नतु कर्तव्यभेदे विनियुज्यमानः [शास्त्रे] धिक्रियते । पुरस्तात् खलु शास्त्राधिकारः प्रवर्तते तमुपजीव्य [कर्तव्य]विशेषः पश्चात् । तत्रोपजीव्यत्वात् प्रबलः शास्त्राधिकारः, [उपजीवकत्वेन] प्रवर्तमानत्वाच्च निर्बलः कर्तव्यविशेषः । प्रबलं च निर्बलमन्य[था ...] यतीति दृश्यते न निर्बलं प्रबलमिति न स तत्प्रयोजक[ः ...] **ज्योतिष्मन्त्रे** च न ब्राह्मणक्षत्रियवैश्यानां त्रयाणां शास्त्राधि[कार] ज्योतिष्ट्वमुच्यते **किं तर्हि ?** रमणीययोनित्वनिबन्धनम् । ब्राह्मणप्रभृतयस्त्रयो वर्णा रमणीययोनयः । यत्रेदं श्रूयते "**तद्** **रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनि[मापद्ये]** **रन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययो[निं]**

